दस्य मरणं साधयितुं शक्यम् ।' इति । तच्छ्रुत्वा सर्वे सृगालास्तथा क्रियतामित्यन्वमन्यन्त । अथ स जरठवञ्चकः कर्पूरतिलकसमीपं गत्वा साष्टाङ्गपातं प्रणम्य प्रोवाच—'देव, प्रसन्नया दृष्ट्यानुगृह्यतामयं जनः ।' इति । हस्ती प्राह—'कस्त्वम्? कुतः समायातः?' इति । सोऽवदत्—'जम्बुकोऽहं सर्वैर्वनवासिभिर्मृगैर्मिलित्वा देवस्य सकाशं प्रेषितः ।' इति । हस्ती पृच्छति स्म—'वनवासिनां मृगाणामस्माभिः किं कार्यम्? ।' इति । वञ्चकोऽब्रवीत्—'देव, श्रूयताम् । बहोः कालात्सर्वे वयमराजका इति विदितमेव देवस्य । तेन च पुनः पुनर्बलवता दुर्बलो हिंस्यते इत्यपि न मया देवस्य वक्तव्यम् । पूर्वेद्युश्च नृशंसेन केनापि शार्दूलेन निरपराधः पितुरेकपुत्रः सर्वैः स्पृहणीयगुणः सृगालबालो निर्दयं व्यापाद्य भक्षितः । पुत्रशोकेन निराहारौ परं दुःखमनुभवन्तौ सहृदयस्पृहणीयौ तत्पितरौ दृष्ट्वा तद्दुःखदुःखिताः सर्वे मृगा दुष्टनिग्राहकं राजानमावश्यकं मन्यमानाः सर्वस्वामिगुणोपेतं देवं राजपदार्हं निरूपयामासुः । अद्य च वृषभलग्नेऽभिषेको निश्चितः । अभिषेकसंभाराश्च संभृताः । तद्यथा लग्नवेला न विचलति तथा कृत्वा मया सह सत्वरमागम्यतां देवेन ।' इति । तच्छ्रुत्वा राज्यलोभाकृष्टो मन्दमतिः कर्पूरतिलकस्तथा करोमीत्याह । अथ स जरठवञ्चकः पङ्किलेन

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पल्वलमार्गेणाग्रे चलितः। कर्पूरतिलकोऽपि महता वेगेन तमनुगच्छन्महापङ्के निमग्नः। अब्रवीच्च—'सखे जम्बुक, किमधुना विधेयम्? पङ्के निपतितोऽहम्। म्रिये। परावृत्य पश्य।' इति। तदाकर्ण्य वञ्चकः प्राह 'देव, मम पुच्छकमवलम्ब्योत्तिष्ठ। यदेवं मूढेन त्वया मम वचसि विश्वासः कृतस्तदनुभूयतामशरणं दुःखम्।' इति। एवं वञ्चकेन वञ्चितो हस्ती मुखादिना नवद्वारेणान्तःप्रविष्टैः पङ्कैः परमं क्लेशमनुभवन्मुहूर्तेन मृतः। सृगालाश्च जरठमाशिषा योजयन्तः शनैः शनैर्हस्तिनं भक्षयामासुः।

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः।
क्रोष्ट्रा हतो यतो हस्ती पङ्कमार्गेण गच्छता॥ ६॥



## कथा ३.

विश्वासो नैव कर्तव्यः स्त्रीषु पुंसा विजानता।
अन्यथा परिभूयेत राजा भर्तृहरिर्यथा॥ ७॥

उज्जयिन्यां भर्तृहरिर्नाम राजाभूत्। तस्य विक्रमो नामानुजः। अनङ्गसेना नाम भार्या। तत्र नगरे मन्त्रशास्त्रप्रवीणः कोऽपि विप्रो बभूव। स च मन्त्रेण भुवनेश्वरीमाराधयामास।

आराधिता सा तस्मै दिव्यमेकं फलं दत्त्वाभाषत—'विप्रवर, दिव्यमेतत्फलं भक्षय । अनेन जरामरणवर्जितो भविष्यसि ।' इति । विप्रोऽपि तत्फलं गृहीत्वा गृहमागत्य देवतार्चनां विधाय यावत्फलं भक्षयितुमयतिष्ट तावदस्य मनस्येवं बुद्धिरुद्भूत्—'अहं तावद्दरिद्रः । जरामरणवर्जितो भूत्वा कस्योपकारं करिष्यामि । चिरकालजीविनापि मया भिक्षाटनेन जीवनं कार्यम् । तदिदं फलं राज्ञे भर्तृहरये प्रयच्छामि । स जरामरणवर्जितो भूत्वा चातुर्वर्ण्यं धर्मतः पालयेत् ।' इति । एवमवधार्य राजसदनं गत्वा फलं तस्मै प्रदाय प्राह—'राजन् देवताप्रसादेन लब्धं दिव्यमेतत्फलं भक्षय । अनेन जरामरणवर्जितो भविष्यसि ।' इति । राजापि तत्फलं गृहीत्वा ब्राह्मणं संमान्य गृहं संप्रेष्य विचारयति स्म—'अहो ममैतत्फलभक्षणादमरत्वं भविष्यति । परमहमनङ्गसेनायामतितरामनुरागवान् । मयि च जीवति सा यदि म्रियेत तदा तस्या वियोगदुःखं न सोढुं शक्नोमि । अत इदं प्राणप्रियाया अनङ्गसेनायै दास्यामि ।' इति । एवं विचार्य तां समाहूय तस्यै तत्फलं ददौ । तस्या मन्दुरिकः कश्चित्प्रियतमः । सा विचार्य तस्मै तत्फलं ददौ । तस्य काचिद्दासी प्रियतमा । स पर्यालोच्य तस्यै तद्दत्तवान् । तस्याश्च कोऽपि गोपालः प्रियो बभूव । सा तस्मै तत्फलं ददौ ।

तस्यापि कस्यांचिद्गोमयधारिण्यां महत्प्रेमाभूत् । स पुनर्विचार्य तस्यै तत्फलं दत्तवान् । सा च गोमयधारिणी कुतोऽपि गोमयं गृहीत्वा तद्भाजनं शिरसि निधाय तदुपरि तत्फलं निक्षिप्य राजवीथीमाजगाम । तदा भर्तृहरिः सह राजकुमारैर्बहिर्गच्छन्गोमयाग्रस्थितं फलं विलोक्य जातसंशयो भवनमागत्य तं ब्राह्मणमाहूयापृच्छत्— 'विप्रवर, यत्फलं भवता दत्तं तादृशमन्यत्किमस्ति ।' इति । विप्रः प्राह— 'राजन्, दिव्यं तत्फलं देवताप्रसादलब्धम् । तादृशं फलं भूलोके नास्ति ।' इति । राजा 'तादृशं फलमिदानीं राजवीथ्यां दृष्टम् ।' तच्छ्रुत्वा ब्राह्मणः 'मया दत्तं फलं भक्षितं वा न वा' इत्यपृच्छत् । राजा 'नाहमभक्षयम् । किं तु देव्यै प्रादाम् ।' इत्याह । ब्राह्मणः 'तर्हि तामाहूय पृच्छ ।' इत्यवदत् । अथ राजा तां समाहूय सशपथमपृच्छत् । सा 'मन्दुरिकाय दत्तम् ।' इति प्रतिजगाद । स त्वाकार्य पृष्टो दास्यै दत्तमित्याह । दासी च गोपालाय दत्तमित्यब्रवीत् । गोपालः समाहूय पृष्टो गोमयधारिण्यै प्रादामित्यकथयत् । ततो जातसंप्रत्ययो राजा परमं विषादं प्राप्य ससंभ्रमं गोमयधारिणीमाकार्य तत्फलं गृहीत्वा चिन्तयति स्म—

रूपे मनोहारिणि यौवने च
वृथैव पुंसामभिमानबुद्धिः ।
नतभ्रुवां चेतसि चित्तजन्मा
कर्तुं यदेवेच्छति तत्करोति ॥ ८ ॥

स्मरोपममपि प्राप्य वाञ्छन्ति पुरुषान्तरम् ।
नार्यः सर्वाः स्वभावेन नोच्यन्ते विमलाशयाः ॥ ९ ॥

कुलजातिपरिभ्रष्टं निकृष्टं दुष्टचेष्टितम् ।
अस्पृश्यमधमं प्रायो मन्ये स्त्रीणां परं प्रियम् ॥ १० ॥ इति ।

एवं विचिन्त्य परं विरक्तो विक्रमं राज्येऽभिषिच्य तस्मै तत्फलं दत्त्वा स्वयं वनं जगाम । स्त्रीषु विश्वासः क्रियमाणः एवंविधान्परिभवाञ्जनयति । तस्मात्तासु विश्वासो न कार्यः ॥



## कथा ४.

सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम् ।
स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा ॥ ११ ॥

अस्ति कस्मिंश्चित्तपोवने शालङ्कायनो नाम तपोधनः । स

कदाचित्स्नानार्थं जाह्नवीं जगाम। तत्र मूषिकां चञ्च्वा गृहीत्वा वियति डयमानं श्येनमपश्यत्। अथ करुणाविष्टो मुञ्च मुञ्चेति वदंस्तदुपरि पाषाणखण्डं प्राक्षिपत्। तेन च प्रहृतः श्येनो मूषिकां प्रक्षिप्य डयितः। दिष्ट्या सजीवा सापि भयत्रस्त-मानसा रक्ष रक्षेति जल्पन्ती मुनिचरणमुपाश्रयत्। मुनिरपि-करुणासमाविष्टस्तां रक्षितुमिच्छञ्जनहासभयात्तां कन्यकां कृत्वा समादाय गृहमागतः। कन्यासहितं मुनिमवलोक्य तत्पत्नी पप्रच्छ— 'भगवन्, कुत इयं कन्या?' इति। सोऽभाषत— 'प्रिये, एषा मूषिका श्येनभीता मां शरणमुपागता। अहं चास्यां संजातकरुणस्त्रातुमिच्छन्निमां जनहासभयात्कन्यकां कृत्वा गृहमानीतवानस्मि। अत इयं त्वया करुणया रक्षणीया। इमां भूयोऽपि मूषिकां करिष्यामि।' इति। तदाकर्ण्य मुनि-पत्नी जगाद— 'भगवन्, मैवं कुरु। अस्यास्त्वं धर्मतः पिता। यतः

जनिता चोपनेता च यस्तु विद्यां प्रयच्छति।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः॥ १२॥

मम चापत्यं नास्ति। तदेषावयोः पुत्री भवतु।' इति। अथ मुनिस्तथास्त्वित्याह। सापि कन्या पित्रोर्हृदयं प्रीणयन्ती शुक्लचन्द्रकलेव ववृधे। क्रमेण च यौवनदशामुपारूढा। अथ

मुनिः पत्नीमुवाच—— 'प्रिये, उपारूढयौवनेयं कन्या वर्तते । तदितः परमनर्हास्मद्गृहवासस्य । यतः——

प्रितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
अविवाह्या तु सा कन्या जघन्या वृषली स्मृता ॥ १३ ॥

—अतो भगवन्तमादित्यमाकार्य तस्मै प्रयच्छामि ।' इति । सापि तथा क्रियतामित्याह । अथ मुनिना समाहूतः सविता समेत्य प्राह— 'भगवन्किमर्थं मामाहूतवानसि । ' इति । मुनिरभाषत —— 'एषा मम कन्या यदि त्वां वृणोति तदिमामुद्वोढुमर्हसि । ' इति । सोऽपि तथेत्याह । कन्या तु तमवलोक्य पितरं प्राह—— 'तात, दहनात्मकोऽयं तपनः । तदेनं नाहमभिलषामि । अन्यस्मै श्लाघ्यतमाय वराय मां देहि । ' इति । तदाकर्ण्य भगवान्सविता तां कन्यकां मूषिकां ज्ञात्वा निस्पृहः प्राह—— 'भगवन्, मत्तः श्लाघ्यो मेघो वर्तते । येनाच्छन्नस्य मम स्वरूपमपि न दृश्यते । तत्तमाहूय देहि । ' इति । अथ मुनिना मेघः समाहूतः । कन्या तु तं दृष्ट्वा 'नायं कठोरगर्जो धाराधरो मे रोचते । ' इत्याह । अनन्तरं मेघस्तां मूषिकां मत्वा मुनिमाह— 'भगवन्, मत्तो बलवान्वायुर्वर्तते । येनाहतो विशीर्णः शतधा भवामि । तत्तमाहूय प्रयच्छ । ' इति । अथ मुनिना पवनः समाहूतः । तमपि दृष्ट्वा सा पितरमाह— 'तात, बलवानप्ययं चञ्चलो

दृश्यते । तदन्यस्मै मां प्रयच्छ ।' इति । तच्छ्रुत्वा भगवान्पवनोऽपि तां मूषिकां विज्ञाय मुनिमाह— 'महर्षे, मत्तो बलीयांसः पर्वताः सन्ति । ये मया चालयितुमपि न शक्यन्ते । तत्तेष्वेकस्मै कन्यां देहि ।' इति । अथ महर्षिणा पर्वतः समाहूतः । कन्यापि तमवलोक्य पितरमाह— 'तात, कठिनदेहोऽयम् । तदन्यः प्रकृष्टो वरः समाहूयताम् ।' इति । तच्छ्रुत्वा पर्वतो महर्षिमाह— 'मुने मत्तो बलिष्ठा मूषकाः सन्ति । ते ह्यस्माकमपि देहं बलाद्भेदयन्ति । अतो मूषकराजमाहूय तस्मै दीयतामियम् ।' इति । अथ मुनिस्तमाहूय पुत्र्यै दर्शयामास । तं दृष्ट्वा रोमाञ्चितशरीरा सा पितरमाह— 'तात, अयमेव मह्यं रोचते । तन्मां मूषिकां कृत्वास्मै प्रयच्छ ।' इति । अथ मुनिः कन्यकां मूषिकां कृत्वा मूषकाय प्रादात् । सा च मूषकं भर्तारं प्राप्य कृतार्थमात्मानं मेने । अतः स्वजातिर्दुरतिक्रमा भवति । साधु चेदमुच्यते

स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा ।
सुतप्तमपि पानीयं पुनर्गच्छति शीतताम् ॥ १४ ॥ इति ।



## कथा ५.

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः ।
पुरुषा हास्यतां यान्ति यथा ते मूर्खपण्डिताः ॥ १५ ॥

कुत्रचिदग्रहारे चत्वारो विद्यार्थिनो बाला बभूवुः । ते शास्त्राध्ययनार्थं कान्यकुब्जं गताः । तत्र शिवभट्टो नाम महापण्डितो बहूनां विद्यार्थिनामाचार्यो बभूव । तमुपगम्य ते सविनयं प्रणम्य विज्ञापयन्ति स्म— 'स्वामिन्, विद्यार्थिनो वयम् । शास्त्राध्ययनाय भवत्सकाशमागताः । तत्कृपया शास्त्राण्यध्यापयितुमर्हसि ।' इति । पण्डितोऽपि तान्वेषभाषादिभिः पात्रभूतान्विज्ञाय तथेत्यङ्गीचकार । अथ ते पण्डितं भक्त्या शुश्रूषमाणाः शास्त्राणि पठन्ति स्म । पण्डितः प्रसन्नेन चेतसा तानध्यापयामास । द्वादशभिर्वर्षैस्ते चत्वारः पण्डिता बभूवुः । अथाचार्यानुज्ञामवाप्य स्वग्रामाय प्रस्थिताः । मध्ये द्वौ पन्थानौ मिलितौ । श्रान्तास्ते तत्रोपविष्टाः । मुहूर्तानन्तरं तेष्वेकः पप्रच्छ— 'केन पथा गच्छामः ?' इति । तस्मिन्नेव समये प्रेतदहनार्थं श्मशानमुद्दिश्य ग्रामीणो महाजनो गतः । तदा चतुर्णामेकेन पुस्तकमुद्घाट्यावलोकितम्— 'महाजनो येन गतः स पन्थाः ।' इति । अथ स महाजनमार्गेण गच्छाम इत्याह । अनन्तरं

महाजनमार्गेण गच्छन्तः श्मशानं प्राप्ताः। तत्र कंचन रासभं दृष्ट्वा द्वितीयेन पुस्तकमुद्धाट्यावलोकितम्—

उत्सवे व्यसने चैव दुर्भिक्षे शत्रुविग्रहे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥ १६॥ इति।

अनन्तरं स रासभं बान्धवमुद्धोषयन्ग्रीवायामालिङ्गितवान्। कश्चित्तस्य पादौ प्रक्षालयामास। अन्यस्तस्य मुखं चुम्बति स्म। अपरः कुशलप्रश्ने त्वरितो बभूव। अथ च यावत्ते दिशोऽवलोकयन्ति तावत्कश्चिदुष्ट्रस्त्वरितगतिः समागतः। तं दृष्ट्वा परस्परं प्रोचुः—किमेतदिति। तदा तृतीयेन पुस्तकमुद्धाट्य पठितम्—'धर्मस्य त्वरिता गतिः।' इति। अथ चतुर्थः प्राह—'इष्टं धर्मेण योजयेत्।' इति। अनन्तरं तैर्मूर्खैः स रासभ उष्ट्रग्रीवायां निबद्धः। तदवलोक्य केनापि रासभस्वामिनो रजकस्याग्रे कथितम्। रजकोऽपि भीतः सत्वरं स्वजनैः समाजगाम। अपृच्छच्च तान् 'किमेवं कृतम्?'। इति। ते प्रोचुः—'यथाशास्त्रमनुष्ठितमिति। अत्रान्तरे प्रेतदाहका अपि तत्र समुदिताः। अथ सर्वे मिलित्वा 'किं तच्छास्त्रम्?' इति पण्डितानपृच्छन्। ते पूर्वोक्तवचनानि पठित्वा तेषामर्थं चोपन्यस्यन्ति स्म। तच्छ्रुत्वा ते सर्वे पण्डितानपि तान्मूर्खानलोकाचारज्ञान्मन्यमानाः परिजहसुः। ते च परिहसिता रासभोष्ट्रौ

विहाय यथाभिलषितं जग्मुः । अतोऽलोकज्ञाः पुरुषाः पाण्डित्यवन्तोऽपि हासपात्रं भवन्ति ॥



## कथा ६.

अपि दण्ड्यं नरं केचिद्विमुञ्चन्ति महीभुजः ।
पूज्यानामनुरोधेन सुविचारनृपो यथा ॥ १७ ॥

अस्ति दक्षिणेन हिमवन्तं विन्ध्यवती नाम नगरी । तत्र सुविचारो नाम भूपालो बभूव । तस्य जयत्सेनो नाम पुत्रोऽभूत् । स च कदाचिदाखेटाय महदरण्यं प्रविश्य हरिणमेकं ददर्श । अथ स मृगयाकुतूहली तमन्वधावत् । परं तरस्वी हरिणः सुदूरमेनं विकृष्य कुत्रापि गुल्मे निलीनः । हरिणमपश्यन्राजकुमारः श्रान्तः परावृत्य पश्यन्नगरमार्गमजानानो दिङ्मूढो बभूव । अथ कथंचिन्मार्गमुत्प्रेक्ष्य मन्दं मन्दमेकाकी समागच्छन्मार्गमध्ये कामपि नदीमपश्यत् । तस्याश्च तीरे कोऽपि विप्रः सायंतनं कर्मकलापमनुतिष्ठन्नासीत् । तत्समीपं गत्वा राजपुत्रः प्राह— 'भो ब्राह्मण, यावदहं जलं पिबामि तावदमुमश्वं गृहाण ।' इति । ब्राह्मणः 'किं तव प्रेष्योऽहमश्वं

ग्रहीतुम् ?' इत्यपृच्छत् । तेन जातकोपो राजपुत्रः कशया ब्राह्मणमताडयत् । सोऽपि कशाताडनमसहमानस्तेन सह विन्ध्यवतीं गत्वा सुविचाराय राज्ञे सर्वं वृत्तान्तं निवेदयामास । तच्छ्रुत्वा नीतिमान्स राजा रोषारुणलोचनः पुत्रं स्वदेशान्निर्वासयितुं यतते स्म । तस्मिन्नवसरे सुमतिर्नाम तस्य सचिवस्तं विज्ञापयामास— 'महाराज, राज्यभारवहनसमर्थं कुमारं किमिति देशान्निर्वासयितुमिच्छसि ? । नाहमिदमुचितं मन्ये । इति । राजा प्रत्युवाच— 'सखे, समुचितमेवेदमस्य दुष्टस्य । यदयं ब्राह्मणं कशया ताडितवान् । बुद्धिमता हि पुरुषेण ब्राह्मणद्वेषो न कार्यः ।

न विषं भक्षयेत्प्राज्ञो न क्रीडेत्पन्नगैः सह ।
न निन्देद्योगिबृन्दं च ब्रह्मद्वेषं न कारयेत् ॥ १८ ॥

किं च,

अत्युन्नतपदं प्राप्तः पूज्यान्नैवावमानयेत् ।
नहुषः शक्रतां प्राप्तश्च्युतोऽगस्त्यावमाननात् ॥ १९ ॥

अतोऽयं मूढो ब्रह्मद्वेषी दण्डनीय एव । अन्यथा ममाकीर्तिर्नरकं च स्याताम् । तथा च स्मृतिः

अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकं चाधिगच्छति ॥ २० ॥ इति ।

एवमभिधाय स राजा येन हस्तेन पुत्रो ब्राह्मणमताडय-त्तस्य हस्तस्य छेदमेव तत्प्रतीकारं निर्णिनाय । तदा विप्रो राजसमीपमेत्य 'भो महाराज, बालिशोऽयं भवतः कुमारोऽज्ञानादेवं कृतवान् । इतः परमीदृशं कर्म न कुर्यात् । आद्योऽयमस्यापराधो मर्षणीयः' इति प्रार्थयत । ततो राजा विप्रवचनं बहु मन्यमानो दण्डनीयमपि स्वपुत्रं विससर्ज । ब्राह्मणोऽपि यथागतमगात् ॥



## कथा ७.

गुरूपदेशं शृण्वन्तः क्षेमं यान्तीह बालकाः ।
गुरूपदेशादभवत्सर्वज्ञः कमलाकरः ॥ २१ ॥

उज्जयिन्यां भट्टिर्नाम कोऽपि ब्राह्मण आसीत् । तस्याभयाम्बा नाम भार्या । कमलाकरो नाम तनयः । एकपुत्रौ तौ कमलाकरे नितान्तं प्रेमवन्तौ बभूवतुः । किं तु कमलाकरः प्रतिदिनमाकण्ठं भुञ्जानो वस्त्राभरणादिभिः शरीरमलंकृत्य विद्यापराङ्मुखो विषयोन्मुखश्चाभवत् । तथाविधं तमाहूय भट्टिः कदाचिदेवमुपदिदेश—'पुत्र, स्वकर्मवशादयमात्मा नानायोनिषु

जन्म प्राप्नोषि। कदाचित्सत्कर्मवशान्मनुष्ययोनिं प्रविशति। तत्रापि ब्राह्मणकुले जन्म महता पुण्येन लभ्यते। तल्लब्ध्वापि त्वमेवं दुर्वृत्तोऽसि। सर्वदा बहिरेव संचरसि। भोजनकाले केवलं गृहमागच्छसि। किं च तवायं विद्याभ्यासस्य कालः। इदानीं यदि विद्यां नाभ्यस्यासि तर्हि पश्चात्तव महान्संतापो भविष्यति।

रूपयौवनसंपन्ना विशालकुलसंभवाः।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः॥ २२॥

अपरं च, यावदहं जीवामि तावत्त्वया विद्याभ्यसनीया। पश्चात्तु सा दुर्लभा भवेत्। अत इतः परं मैवं स्वच्छन्दं चर। परित्यज बालबुद्धिम्। प्रवर्तय मनो विद्यायाम्। निवर्तय विषयेभ्यः। सफलय चात्मनो जन्म।' इति। एवं पितुरुपदेशं श्रुत्वा पश्चात्तापपीडितः कमलाकरः 'यदाहं सर्वज्ञो भविष्यामि तदा पितृमुखं द्रक्ष्यामि।' इति मनसि निश्चित्य काश्मीरदेशं जगाम। तत्र चन्द्रमौलिभट्टो नाम कोऽपि महापण्डितोऽभूत्। तत्सकाशे बहवो विद्यार्थिनो विद्यामभ्यस्यन्तीति श्रुत्वा कमलाकरस्तमुपसृत्य सविनयं प्रणम्य विज्ञापयति स्म— 'भोः स्वामिन्, मूर्खोऽहं भवतः सकाशाद्विद्यामभ्यसितुमागतोऽस्मि। प्रसीद। यथाहं सर्वज्ञो भवेयं तथा मामध्यापयितुमर्हसि।'

इति । पण्डितोऽपि विनीतमेनं शिष्यं स्वीचकार । कमलाकरश्च भक्त्या गुरुं शुश्रूषमाणः पपाठ । तथा च स्मृतिः

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थं नोपलभ्यते ॥ २३ ॥ इति ।

यथा खनन्खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥ २४ ॥ इति च ।

एवमप्रमादं शुश्रूषया विद्याभ्यासपरे तस्मिन्गुरोर्महती प्रीतिरजायत । सर्वाणि शास्त्राणि सम्यगध्यापयति स्म । अन्ते च प्रसन्नः सिद्धसारस्वतं नाम रहस्यतमं मन्त्रं तस्मा उपदिदेश । तेन चोपदेशेन सर्वज्ञो भूत्वा कमलाकरः कृतार्थमात्मानं मन्यमानः पितृमुखं दिदृक्षुर्गुरोरनुज्ञामवाप्य स्वनगरमाजगाम । तत्पितापि सर्वज्ञं पुत्रं ज्ञात्वा परां संतुष्टिमगमत् ॥



## कथा ८.

उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः ॥ २५ ॥

अस्ति कस्मिंश्चिद्वने चतुरको नाम जम्बुकः । तेन कदा-

चिदरण्ये स्वयं मृतो गजः समासादितः । अथ तुष्टस्तस्य समन्ताद्भ्रमति स्म । परं कठिनां तस्य त्वचं दन्तैर्भेत्तुं न शशाक । अत्रान्तरे कोऽपि सिंहस्तत्राजगाम । तं दृष्ट्वा वञ्चकः चतुरकः साष्टाङ्गपातं प्रणिपत्य प्रोवाच— 'स्वामिन्, भवत्पादसेवकोऽहं भवदर्थे गजमिमं रक्षामि । तद्भक्ष्यतां स्वामिना ।' इति । सिंहः प्राह— 'जम्बुक नाहमन्यहतं सत्त्वं भक्षयामि । तदेष ते मया प्रसादीकृतः । अतस्त्वमेव भक्षय ।' इति । तच्छ्रुत्वा जम्बुकः सानन्दमाह— 'युक्तमेतत्स्वामिनो मृगेन्द्रस्य । इति । अथ सिंहो गतः । तस्मिन्गते व्याघ्रः कश्चित्समायातः । तं दृष्ट्वा व्यचिन्तयत्— 'दुरात्मा मृगेन्द्रः प्रणिपातेन प्रतारितः । इमं तु शूरं भेदेन प्रतारयिष्यामि ।' इनि । अथ तदभिमुखो भूत्वा प्राह— 'भद्र, कोऽपि केसरी गजमिमं व्यापाद्य रक्षणार्थं मां नियुज्य स्नानार्थं गतः । गमनकाले च तेनोक्तम्— 'जम्बुक, पूर्वेद्युः केनापि दुष्टव्याघ्रेणात्रागत्य मया हतो गजो ममासंनिधाने मस्तकं भक्षयित्वोच्छिष्टः कृतः । अतो मयेदं वनं व्याघ्रशून्यं कर्तव्यम् । तद्यदि कश्चिद्व्याघ्रः समागच्छति तद्गूढं मम निवेदनीयम् ।' इति अतो यावत्केसरी नागच्छति तावत्पलायनं क्रियताम् ।' तच्छ्रुत्वा भयत्रस्तमना व्याघ्रः प्राह— 'भगिनीसुत, प्रसीद । देहि मे प्राणभिक्षाम् ।

मयि कृपां कृत्वा चिरादागतस्यापि तस्य मदागमनं नाख्येयम् ।' इति । वञ्चकश्चतुरकस्तथा करोमीत्याह । व्याघ्रोऽपि सिंहभयात्सत्वरं पलायितः । पलायिते तस्मिन्वानरः कोऽप्याजगाम । तमपि दृष्ट्वा चिन्तयामास— 'वानराणां दंष्ट्रास्तीक्ष्णा दृढाश्च । तदनेन गजचर्म भेदयामि ।' इति । एवमालोच्य तमुवाच— 'भगिनीसुत, चिराद्दृष्टोऽसि । अपि कुशलं सकुटुम्बस्य तव । क्षुधित इव प्रतिभासि । एष गजः सिंहेन व्यापादितः । अहं च रक्षणार्थं तेन नियुक्तः । अतो यावत्स नागच्छति तावदेतन्मांसं त्वरितं भक्षयित्वा तृप्तेन भवता गन्तव्यम् ।' इति । वानरः प्राह— 'माम, न युक्तमुक्तं भवता ।

एति जीवन्तमानन्दो नरं वर्षशतादपि ।
जीवन्ती जानकी प्राप्य भर्तारं सुखिता पुरा ॥ २६ ॥

तन्नाहं सिंहस्याहारो भवितुमुत्सहे ।' इति । चतुरकोऽवदत्— 'भगिनीनन्दन, मैवं वद । विस्रब्धो भक्षय त्वम् दूरादेव तस्यागमनं निवेदयिष्यामि । मास्तु ते भयम् ।' इति । अथ वानरो दंष्ट्राभिर्गजचर्म विदार्य मांसं भक्षयितुमारभत । वञ्चकस्तु चर्मभेदं जातं दृष्ट्वा कृतार्थः प्राह— 'भोः, गम्यतां गम्यताम् । एष सिंहः समायाति ।' इति । तच्छ्रुत्वा भीतो वानरः पलायांचक्रे । अथासौ वञ्चको यावद्वानरकृतद्वारेण गजमांसं

भक्षयितुमारभत तावदपरो जम्बुकः क्रुद्धः समाजगाम । तं दृष्ट्वासाविमं श्लोकमपठत्—

उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः ।। इति ।

अथ पराक्रमेण तं जित्वा कान्दिशीकं विधाय शनैःशनैर्गजमांसं बुभुजे ॥



## कथा ९.

महामुनिकृतं शापं न समुल्लङ्घयेन्नरः ।
महर्षिशापमुल्लङ्घ्य मृतः पाण्डुमहीपतिः ॥ २७ ॥

द्वापरान्ते चन्द्रवंश्यः पाण्डुर्नाम भूपो बभूव । तस्य कुन्ती माद्री चेति द्वे भार्ये बभूवतुः । मृगयाभिलाषी स भूपः कदाचिदरण्यं भार्याभ्यां सममियाय । तत्र सिंहव्याघ्रशरभमुखान्बहून्मृगान्व्यापाद्य मदनपरवशं सानुरागं रममाणं कमपि हारिणमिथुनमपश्यत् । तत्तु वस्तुतो मृगरूपधरं मुनिमिथुनम् । तदजानन्स राजा पुंहरिणं संलक्ष्य बाणमेकममुञ्चत् । तेन हृतप्राणो मुनिः परित्यक्तमृगरूपः स्वीकृतनिजरूपश्च राजानमशपत—

'अयि कठिनहृदय, यदि भवान्भार्यामुपगच्छति तर्हि सद्य एव कालधर्ममुपैष्यति । यन्मां रतिपरवशं निरपराधं व्यापादितवान् ।' इति । अथ स शापदग्धो भूपः सह भार्याभ्यां नितान्तं खिन्नो राज्ये च निर्विण्णस्तस्मिन्नेव काननेऽष्टाङ्गयोगपरोऽभवत् । अथ कदाचिदात्मनोऽपुत्रतां स्मृत्वा कुन्तीमुपह्वरे जगाद—'प्रिये, पापिना मया प्राक्तनेषु जन्मसु कीदृशं वा दारुणं पापमकारि । येनैवं निरपराधमुनिवधे प्रेरितोऽहम् । अद्य चापुत्रोऽहं कथमृणनिर्यातनेन पितॄन्प्रीणयिष्यामि । 'एष वा अनृणो यः पुत्री' इति हि श्रुतिः । किं च

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानः पतत्यधः ॥ २८ ॥

इति स्मर्यते । पितृशापश्च बहून्निरयाननुभावयेदिति प्राज्ञवादः । तद्बुद्धिमति, चिन्तय कंचिदुपायम् । येनाहं पुत्रवान्भवेयम् ।' इति । एवं दीनदीनं भर्तृवचनमाकर्ण्य साध्वी कुन्ती मुहूर्तं चिन्तयामास । अथैवं भर्तारं प्राह—'नाथ, अहं किल कन्यादशां निर्विशन्ती पितृगृहमागतं महामुनिं दुर्वाससं पितुर्निदेशेन चिरं पर्यचरम् । तेन प्रीतः स महर्षिरन्ते देवताप्रसादसंपादनसाधनं मन्त्रमेकं मह्यमुपदिदेश । तदद्य यद्यनुमन्यसे तर्हि तत्प्रभावेण देवानाराध्य पुत्राञ्जनयिष्यामि ।' इति । तच्छ्रुत्वा

राजा जाताश्वासस्तथा क्रियतामित्यन्वमन्यत । अथ सा मन्त्र-प्रभावेण धर्माद्युधिष्ठिरं पवनाद्भीमं जिष्णोरर्जुनं च जनयामास । किं च तमेव मन्त्रं माद्र्या उपदिदेश । साप्यश्विनावाराध्य नकुलसहदेवौ सुतावजीजनत् । पाण्डुश्च पुत्रजन्मना संतुष्टः कृतार्थमात्मानं मेने । तान्बालान्वन एव वसन्पोषयामास । अथ कदाचिद्वसन्तसमये काममोहितो मुनिशापमुल्लङ्घ्य माद्रीमुप-गच्छन्सद्यः कालधर्ममुपेयिवान् । साध्वी माद्री चात्मनिमित्तं भर्तुर्मरणमसहमाना सहैव तेन चितामारुरोह । हन्त! कुन्ती बालैः पुत्रैःसह वने किं कुर्यात् । अथ विदितवृत्तान्तः पाण्डो-र्ज्यायान्भ्राता धृतराष्ट्रः कुन्त्या सह तत्पुत्रान्नगरं नीत्वा प्रेम्णा पोषयामास ॥



## कथा १०.

प्राज्ञाः पुरुषकारेण प्राप्नुवन्ति समीहितम् ।
क्षीरोदमथनाद्देवा अजरामरतां गताः ॥ २९ ॥

पूर्वं कृतयुगे देवा असुराश्चाजरत्वममरत्वं चाभिलषन्तः वासुकिं योक्त्रं मन्दरं च मन्थानं कृत्वामृतलिप्सया क्षीराब्धिममन्थुः । तत्रादौ कालानलसदृशं हालाहलाख्यमखिललोकदाहकं महा-

विषं प्रादुरभूत् । प्रथमतः प्रादुर्भूतं दुराधर्षं तन्महाविषमालोक्य भीतभीता देवाः शरणार्थिनो निखिललोकशरण्यं महादेवं पशुपतिं शंकरं शरणमवापुः । भक्तवत्सलः स भगवान्नीलकण्ठः सद्यः प्रादुर्भूयातिघोरं हालाहलममृतमिव तत्क्षणमेव भक्षयामास । पुनश्च चिरं मथ्यमाने दुग्धाब्धौ मन्थानो मन्दरः पातालं प्राविशत् । अथ देवा भगवन्तं हृषीकेशं तदुद्धरणाय प्रार्थयामासुः । सोऽपि भगवान्सद्यः कामठं रूपमास्थाय दुग्धसिन्धुं प्रविश्य मन्दरमुद्धृत्य स्वपृष्ठे धारयमाणः पर्वताग्रं च करैराक्रम्य देवानां मध्यगतः स्वयमपि सिन्धुं ममन्थ । अथ सदण्डकमण्डलुर्धन्वन्तरिः षष्टिः कोटयोऽप्सरसः परिचारिकाश्च तासामसंख्येयाः प्रादुरभूवन् । ताश्च देवेषु दानवेषु वा केऽपि न प्रतिजगृहुः । अप्रतिग्रहणाच्च ताः सर्वाः साधारणा बभूवुः । अथ वरुणस्य कन्या वारुणी सुरा प्रादुर्बभूव । तां चानिन्दितामदितेः पुत्रा जगृहुः । न दितिसुताः । तेनादित्याः सुरादैत्याश्चासुरा अभ्यधीयन्त । इत्थं कल्पशाखिनः कामधेनवश्चिन्तामणय उच्चैःश्रवा ऐरावतः कौस्तुभश्चन्द्रो लक्ष्मीरित्यमूल्या असंख्याः पदार्था अजायन्त । तांश्च ते ते देवा अहमहमिकया स्वीचक्रुः । अथ तैरप्यतृप्ताः पुनरब्धिं मथितुमारभन्त । अत एवाहुः—

रत्नैर्महार्घैस्तुतुषुर्न देवा
न लेभिरे भीमविषेण भीतिम् ।
सुधां विना न प्रययुर्विरामं
न निश्चितार्थाद्विरमन्ति धीराः ॥ ३० ॥ इति ।

अन्ते चामृतं प्रादुर्भूतं दृष्ट्वा तन्निमित्तो देवानां दैत्यानां च महान्कलहः समभवत् । तत्र बहवो दैत्या देवैर्निषूदिताः । हतशेषा अपि भगवता मोहिनीरूपधारिणा विष्णुना मोहिताः सुरेभ्योऽमृतं प्रदाय तेन वञ्चिता बभूवुः । देवाश्चामृतप्राशनेनाजरा अमराश्च जाताः ॥



## कथा ११.

न विश्वासं विना शत्रुर्देवानामपि सिध्यति ।
विश्वासात्त्रिदशेन्द्रेण दितेर्गर्भो विदारितः ॥ ३१ ॥

एवममृतनिमित्तेन कलहेन देवैर्हतेषु दैत्येषु पुत्रशोकपीडिता दितिर्भर्तारं काश्यपमिदमब्रवीत् । 'भगवन्, महाबलैः शक्रमुखैस्तव पुत्रैर्बहवो मम पुत्रा हताः । अतः शक्रहन्तारं पुत्रमभिलषन्ती तपश्चरिष्यामि । तच्च भगवाननुज्ञातुमर्हति ' इति । तच्छ्रुत्वा महात्मा काश्यपः प्राह—

एवं भवतु कल्याणि पुत्रशोकपरायणे ।
परं नियममास्थाय शुचिर्भूत्वा तपश्चर ॥ ३२ ॥
पूर्णे वर्षसहस्रे तु शक्रहन्तारमाहवे ।
पुत्रं त्रैलोक्या भर्तारं मत्प्रसादादवाप्स्यसि ॥ ३३ ॥ इति ।

एवं महात्मनो भर्तुरनुग्रहेण परं हर्षाकुला सा शत्रुं शक्रं हतमेव मन्यमाना कुशप्लवनमासाद्य दुश्चरं तपश्चचार । तदेतद्विज्ञाय धीमान्सहस्राक्षो गूढहृदयस्तपश्चरन्तीं तां परमया भक्त्या परिचचार । सापि मुग्धा तदीयं हृदयमजानती तस्मिन्संजातविश्वासा बभूव । एवं महान्कालो गतः । अथ दशोने वर्षसहस्रे भक्तिपूर्वया परिचर्ययातितमां प्रीता सा मुग्धा सहस्राक्षमब्रवीत्—'भद्र, त्वया हतपुत्राहं त्वज्जिघांसया महापराक्रमं त्रैलोक्यविजयिनं पुत्रमभिलषन्ती महात्मनस्तव पितुरनुग्रहेण दुश्चरे तपश्चरणे प्रवृत्तास्मि । स च भगवाञ्शौचेन तपश्चरन्त्या मम वर्षसहस्रान्ते तादृशसुतोत्पत्तिमनुजग्राह । अद्य च दश वर्षाण्यवशिष्टानि । नातिचिरेण कालेन तादृशः पुत्रो मम जनिष्यते । परं भक्तिपूर्वयानया तव परिचर्यया नितान्तं प्रसन्नाहं त्वत्क्षेममकाभिकाङ्क्षन्ती त्वद्वधायोद्योक्ष्यमाणं मम पुत्रं समाधाय त्वयि स्निग्धं करिष्यामि । त्वमपि त्रैलोक्यविजयिना तेन भ्रात्रा सह त्रैलोक्यराज्यं भोक्ष्यसि ।' इति । एवं सस्नेहं तस्या

वचनं श्रुत्वापि पितुरनुग्रहाज्जनिष्यमाणेन तस्याः पुत्रेणात्मनो वधमपरिहार्यं मन्वानः स धीमान्समयं प्रतीक्षमाण एव बभूव। युज्यते चेदम्। यतः

जातमात्रं न यः शत्रुं व्याधिं च प्रशमं नयेत्।
महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते ॥ ३४ ॥

सत्येवं कुत्रापि मध्याह्ने निद्रापरवशा सा मुग्धा शीर्षतः पादौ कृत्वा सुष्वाप। तादृशीं तामशुचिं विज्ञाय रन्ध्रान्वेषी पुरंदरस्तस्याः शरीरं प्रविश्य शितधारेण वज्रेण गर्भं सप्तधा खण्डयामास। खण्ड्यमानो गर्भो व्यथामसहमानः सुस्वरं रुरोद। रोदनध्वनिं श्रुत्वा दितिः स्वापात्प्राबुध्यत। मा रुदो मा रुद इति गर्भं शक्रोऽभ्यभाषत। रुदन्तमपि गर्भं शत्रुघाती पुरंदरः पुनः खण्डयामास। न हन्तव्यो न हन्तव्य इत्येवं दितिरब्रवीत्। निर्जगाम ततः शक्रो मातुर्वचनगौरवात्। अथ तया सानुनयं प्रार्थितस्तानि सप्त खण्डानि सप्तानां मरुतां स्थानपालकानकरोत्। एवं परिचर्यया दितेर्विश्वासमुत्पाद्य शक्रो रन्ध्रमासाद्य शत्रुं हत्वा क्षेममवाप ॥



## कथा १२.

असतां सङ्गदोषेण सन्तोऽप्यायान्ति विक्रियाम् ।
दुर्योधनस्य सङ्गेन भीष्मो गोहरणे गतः ॥ ३५ ॥

पाण्डवेषु परैरज्ञातं विराटनगरे वसत्सु विराटस्य स्यालः सेनापतिश्च दुरात्मा कीचको हीनभाग्य इव लक्ष्मीं साध्वीं द्रौपदीं बलाच्चकार । तत्परिज्ञाय वल्लभनामा सूदवृत्तिर्भीमसेनो दुरात्मानं तं जिघांसुः सैरन्ध्रीवृत्त्या मालिनीनाम्न्या तयैव तं रात्रौ विजनां नृत्यशालामागमयामास । स्वयं पूर्वमेव तत्र गत्वा गूढः स्थितः । अथ निशीथे समागतं तं दुर्बुद्धिं मुष्टिघातैः श्लथसंधिबन्धं विधाय कराभ्यां निष्पिष्य चूर्णयमास । अथ तद्वधं द्रौपदीनिमित्तं जानन्तस्तत्सोदराः शतमुपकीचका विराटानुमत्या सहैव तेन तामपि दिधक्षन्तः श्मशानं निन्युः । तदपि परिज्ञाय भीमः केनाप्यनुपलक्षितेन पथा श्मशानवाटं गत्वा मार्गस्थं कमपि महीरुहं समूलमुत्पाट्य तेन शतमुपकीचकान्निषूदयामास । अथ च समाश्वास्य प्रियतमां द्रौपदीं गृहं संप्रेष्य स्वयमपि जनैरनुपलक्षित एव महानसं प्राविशत् । इत्थं कीचकवधेन दुर्बलं विराटमवगम्य तस्य सामन्तास्त्रिगर्तेशः सुयोधनमित्रं सुशर्मा हस्तिपुरं गत्वा विराटगोग्रहणे सुयोधनं

प्रेरयामास । स च दुर्मेधा विराटं जित्वा तद्राज्यं प्राप्स्यामीति मन्वानः प्रथमं दक्षिणगोग्रहणे सुशर्माणं नियुज्य पश्चात्स्वयमपि ससैन्यः प्रतस्थे । हन्त महासाधुर्भीष्मोऽप्यसतस्तस्य सङ्गेन तत्र प्रस्थितः । अथ दक्षिणतस्त्रिगर्तैर्गाः काल्यमानाः श्रुत्वा ससैन्यो विराटः कङ्कनाम्ना युधिष्ठिरेण वल्लभाभिधानेन भीमेन ग्रन्थिकनाम्ना नकुलेन तन्तिपालाभिधेन सहदेवेन च सह प्रस्थाय दक्षिणगोकुलं प्राप्य त्रिगर्तैः सहायुध्यत । तत्रोभयोः सैन्ययोर्बहवो भटा हस्तिनो वाजिनश्च हता बभूवुः । अन्ते च सुशर्मा जरठं विराटं जीवग्राहं गृहीत्वा दृढं बद्ध्वा नेतुमारभत । कृतज्ञो युधिष्ठिरस्तु स्वपोषकस्य विराटस्य तादृशं परिभवमसहमानो रिपुभीमेन भीमेन विराटं बन्धाद्विमोच्य सुशर्माणं च निग्राह्य विसर्जयामास । एवं युधिष्ठिरभीमाभ्यां शत्रुमुखाद्रक्षितो विराटस्तौ बहुधा मानयामास । अत्रान्तरे कौरवैरुदीच्यां काल्यमाना गाः श्रुत्वा विराटस्यापत्यमुत्तरः कौरवसैन्यजयाय षण्डरूपमर्जुनं सारथिं कृत्वा गोकुलमासाद्य संख्यातीतं शत्रुसैन्यं दृष्ट्वा भीतः पलायितुमारभत । अथार्जुनस्तस्य धैर्यमुत्पाद्य सारथ्ये तं निवेश्य गाण्डीवमादाय स्वयमेक एव शत्रुभटैर्योद्धुमारेभे । असंख्या योधा गजा अश्वाश्च तेन तदा निषूदिताः । अन्ते च प्रस्वापनास्त्रं प्रयुज्य द्रोणदुर्योधनकर्णमुखानसंख्यान्महारथान्प्र-

स्वापयामास । महानुभावो भीष्मोऽपि तेनास्त्रेणाननुभूतपूर्वं क्लेशमनुबभूव । एवमर्जुनः सर्वान्पराजित्य सहोत्तरेण विराटनगरं गतः । तेऽपि दुर्योधनादयः पराजिताः क्रमेण स्वापात्प्रबुध्य हस्तिपुरं गताः । अतो निर्विकारा अपि महान्तः सङ्गदोषेण विकुर्वन्ति । ततश्च कष्टमनुभवन्ति । हन्त! किं क्रियताम् ॥



## कथा १३.

महत्पादरजःसङ्गाद्देशानां जायते शुभम् ।
ऋष्यश्रृङ्गपदन्यासादङ्गाः क्षेममुपागताः ॥ ३६ ॥

अङ्गेषु लोमपादो नाम राजा बभूव । तस्य जनपदे कदाचिन्महत्यनावृष्टिः संजाता । तया बहूनां प्राणिनामुच्छेदः समभवत् । अथ स राजा वेदपारगैर्विप्रैर्वरुणमाराधयामास । अथापि वृष्टिर्नाजनि । अनन्तरं चिन्ताकुलो भूपालो भूसुरानाहूय पप्रच्छ 'केनोपायेन वृष्टिः स्यात्'? इति । ते चैवं प्रोचुः— 'महाराज, अस्ति विभाण्डको नाम महर्षिर्वनस्थः । तस्य च ऋष्यश्रृङ्गो नाम तनयः । स महात्मा यथाजातः । अनाघ्रातविषयगन्धः । न जानपदान्वृत्तान्ताञ्जानाति । पितेव ब्रह्मनिष्ठः । पितृ-

शुश्रूषापरश्च । स यद्यानीयते जनपदं तदवश्यं वृष्टिर्भविष्यति । परं तु पितुः सकाशात्तदानयनं दुष्करं मन्यामहे' इति। तच्छ्रुत्वा राजा किंचिदिव जाताश्वासस्तदानयनोपायं पुरोहितेन मन्त्रिभिश्च सह चिन्तयामास । ते च प्राहुः— 'महाराज, सुन्दरीभिश्चतुराभिश्च वारवनिताभिः प्रलोभ्य तदानयनं सुकरं संभावयामः' इति । अथ राजापहसितसुरसुन्दरीरूपाः सर्वाभरणभूपिता वारसुन्दरीः संमान्य प्रेषयामास । ताश्च मुनिप्रलोभनार्थमतिमधुराणि मोदकलड्डुकादीनि विविधान्यद्भुतानि भक्ष्याणि गृहीत्वा तदाश्रमं प्राप्य तत्समीपे कतिचिद्दिनानि वासं चक्रुः । असकृच्च तद्दृष्टिगोचरा भूत्वा क्रमेण मुनिमाकृष्य भक्ष्यादिभिः प्रलोभ्यात्मवशमानिन्युः । एवं सप्ताष्टानि वासराणि तत्रोषित्वा विभाण्डकानुपलक्षितमेव तं स्वदेशं प्रापयामासुः । प्राप्तमात्रे च तस्मिन्भगवान्पर्जन्योऽपरिमितं किल ववर्ष । तच्च जनानामत्यद्भुतमभूत् । अथ विस्मयानन्दपरवशो महाराजो लोमपादो महात्मानमृष्यशृङ्गं सबहुमानं गृहमानीय बहुधा पूजयामास । अथ चायोध्याधिपतेर्दशरथस्यौरसीं स्वस्य च कृतिकां सुतां शान्तामग्निसाक्षिकं तस्मै ददौ । सोऽपि तां परिणीय तृप्तः सह तया विविधानमानुषान्भोगाननुभवंस्तत्रैव सुखमवसत् ॥



## कथा १४.

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ ३७ ॥

द्वैतवने वसत्सु पाण्डवेषु दुराशयो दुर्योधनः स्वात्मैश्वर्यप्रदर्शनेन तानवमन्तुमिच्छन्सान्तःपुरः सामात्यः सपरिजनः कर्णदुःशासनादिसहितश्चतुरङ्गबलपरिवृतश्च घोषयात्रामिषेण हस्तिपुरात्प्रतस्थे क्रमेण च तद्वनं प्राप्तः । तादृशं तदाशयं विजानन्पाण्डवपक्षपाती भगवाञ्शतक्रतुस्तं निग्रहीतुमिच्छन्महाबलं गन्धर्वराजं चित्रसेनं ससैन्यं प्रेषयामास । स च द्वैतवनं प्राप्य कौरवैः कलहायितुमारेभे । अथोभयोः सैन्ययोर्विबुधविस्मयावहं महद्युद्धं समभवत् । तत्र महाबलश्चित्रसेनः कर्णादीन्महारथान्विविधदिव्यास्त्रप्रयोगेण पलायनशरणान्विधाय दुर्योधनं च सानुजं जीवग्राहं गृहीत्वा दृढं च बद्ध्वा विहायसा निनाय । अथाशरणास्तदमात्यादयो भीतभीता युधिष्ठिरं शरणमवापुः । स च धर्मनन्दनः परैः स्वकुलस्य परिभवमसहमानो गन्धर्वनिग्रहाय भ्रातरौ भीमार्जुनौ चोदयामास । तौ तु बहुधात्मापकारिणं दुराशयं दुर्योधनं गन्धर्वेभ्यो मोचयितुं नानुमेनाते । अथाप्यव्याजकारुणिकः स साधुर्भ्रातरौननुनीय बला-

न्निर्वन्ध । भ्रातृवाक्यमुल्लङ्घयितुमशक्नुवन्तौ महाबलौ तौ नकुलसहदेवाभ्यां सह ततः प्रस्थाय गन्धर्वान्प्राप्य तैर्युद्ध्वा तेषु बहून्व्यापाद्य चित्रसेनं जित्वा सानुजेन बद्धेन दुर्योधनेन सह तं भ्रातुः समीपमानिन्यतुः । अहो ! पश्यत भीमार्जनयोः पराक्रमम् । मानिनामग्रणीर्दुर्योधनस्तु पाण्डवमुखमवलोकयितुं लज्जमानोऽवनतमुखस्तस्थौ । युक्तं चेदं धीरोद्धतस्य तस्य । 'प्राणं वापि परित्यज्य मानमेवाभिरक्षतु ।' इति वचनात् । अथ युधिष्ठिरमुक्ता गन्धर्वा यथागतं जग्मुः । दुर्योधनं च सानुजं बन्धाद्विमोच्य तद्धितैषी धर्मनन्दन एवमुपदिदेश—

मा स्म तात पुनः कार्षीरीदृशं साहसं क्वचित् ।
न हि साहसकर्तारः सुखमेधन्ति भारत ॥ ३८ ॥

स्वस्तिमान्सहितः सर्वैर्भ्रातृभिः कुरुनन्दन ।
गृहान्व्रज यथाकामं वैमनस्यं च मा कृथाः ॥ ३९ ॥ इति ।

एवमपकर्तुरप्युपकर्त्रा तेन साधुना हितमुपदिश्य मुक्तः स दुष्टोऽनुजैरमात्यादिभिश्च सहितो यथाभिलषितं ययौ ॥



## कथा १८.

न निर्मितो वै न च दृष्टपूर्वो
न श्रूयते हेममयः कुरङ्गः ।
तथापि तृष्णाजनि राघवस्य
विनाशकाले विपरीतबुद्धिः ॥ ४० ॥

पञ्चवट्यां सीतालक्ष्मणाभ्यां सह वसन्रामः कदाचिद्धोररूपया रावणभगिन्या शूर्पणखानाम्न्या राक्षस्या ददृशे । द्वितीयमिव मन्मथं राघवं दृष्ट्वा काममोहितानेकयुगजीविनी सा निशाचरी कामुकीभूय क्षीरकण्ठं तं निर्वबन्ध । अदृष्टपूर्वं तस्या रूपं काममोहितायास्तस्याः स्वस्मिन्ननुरागं च दृष्ट्वाश्चर्यपरवशो राघवः सपरिहासं तां लक्ष्मणाय चोदयामास । अथ लक्ष्मणमुपगम्य निर्बध्नती सा मूढा तेनापि निराकृता राघवं पुनराजगाम । एवं गतागताभ्यां खिन्नां सीतापहारेणात्ममनोरथं साधयितुकामां तां दुष्टां राघवानुमत्या सौमित्रिर्नासिकाच्छेदनेन विकृतरूपामकरोत् । अनन्तरं क्रोधसमाविष्टा सा दुष्टा विस्वरं विक्रोशन्ती जनस्थानं गत्वा भ्रातरौ महाबलौ खरदूषणौ राघवनिग्रहाय प्रेरयामास । अथ सक्रोधमागतानां खरमुखानां रक्षसां चतुर्दश सहस्राण्येक एव राघवो लीलया वैवस्वतपुरीं प्रापयमास ।

अनन्तरं छिन्ननासिका निहतबान्धवा च सा निशाचरी सत्वरं लङ्कामुपेत्य राघवेणात्मनः परिभवं खरदूषणादिवधं च रावणाय कथयामास । वर्णयामास च निरतिशयं सीतायाः सौन्दर्यम् । दुर्बुद्धी रावणोऽपि सद्यः संजातमोहः सर्वलोकजननीं राघवजायां जानकीमपजिहीर्षुर्भागिनेयं मायिनं मारीचं हैमहरिणरूपधारिणं सीताया दृष्टिगोचरे संचारयामास । स्वयं च सरथो रामाश्रममुपेत्य गूढस्तस्थौ । अथ जानकी लोचनहरं विचित्रविन्दुभूषितं सौवर्णं मायाहरिणमवलोक्य तस्मै स्पृहयन्ती तद्ग्रहणाय राघवं चोदयामास । सोऽपि विधिवशाल्लक्ष्मणं सीतारक्षणार्थे निक्षिप्य तद्ग्रहणाय प्रतस्थे । मायाहरिणश्चाशां प्रदर्शयन्नाश्रमात्सुदूरं राघवमाकृष्यान्ततो राघवशरेण विद्धः 'हा सीते हा लक्ष्मण' इत्युच्चैस्तरामाक्रन्दन्मातुलार्थे प्राणान्मुमोच । आश्रमस्था सीता राघवस्येवाक्रन्दध्वनिमाकर्ण्य तस्यैव किमप्यनिष्टमाशङ्कमाना तद्वृत्तान्तज्ञानाय बलाल्लक्ष्मणं प्राहिणोत् । गते लक्ष्मणे पापी रावणः संन्यासिरूपेण राघवाश्रमं प्रविश्य मुग्धया जानक्या पूजितः पश्चान्निजरूपं धृत्वानिच्छन्तीमपि तां साध्वीं हठाद्रथमारोप्य लङ्कामनैषीत् । अथ राघवौ यावदागत्य पश्यतस्तावच्छून्यमाश्रमं विलोक्य भीतौ अथ च तत्र तत्र सीतान्वेषणपरौ निराहारौ निर्निद्रौ महान्तं कालमवचोगोचरं

क्लेशमनुवभूवतुः । परमन्ते दाशरथिः सुग्रीवसहायो लङ्कां प्रविश्य महता प्रयासेन सकुडुम्बं दशाननं निःशेषं विनाश्य सीतां प्राप्य सुखी वभूव ॥



## कथा १६.

गान्धर्वेण विवाहेन वह्व्यो राजर्षिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥४१॥

पुरा किल चन्द्रवंश्यो दुष्यन्तनामा कोऽपि सार्वभौमो वभूव । स कदाचिन्मृगयां कर्तुं ससैन्यो वनमियाय । तत्र वहून्मृगान्व्यापाद्य कमपि हरिणमनुधावन्महर्षेः कण्वस्याश्रमं विवेश । स तु महर्षिस्तदानीमाश्रमे नासीत् । यतो वहुदिवसप्राप्यं देशं गतः । परं तस्य कृतिका दुहिता शकुन्तला राजानं तमभ्यागतक्रियया पूजयामास । तां च राजर्षेर्विश्वामित्रस्यौरसीं सुतामात्मनोऽनुरूपां विलोक्य राजा परिणेतुकामो वभूव । परं व्रह्मर्षेः कन्यां मन्यमानः क्षत्रपरिग्रहयोग्या स्यान्न वेति संदिदेह । अन्ते च स्वान्तःकरणप्रवृत्त्यैव तामात्मपरिग्रहयोग्यां निश्चिकाय । अथ च तां विना नगरं गन्तुमपारयन्सै-

न्यानि संप्रेष्य परिमितपरिजनः कतिचिद्दिनानि तत्रैव न्यवसत्। सापि तद्दर्शनसमकालमेव तस्मिञ्जातानुरागा पितुरसंनिधानेन किमपि कर्तुमशक्नुवती संतप्यते स्म। सत्येवं कुत्रापि दिने विजने तां विलोक्य लब्धावकाशो भूपः सानुरागं प्राह— 'सुन्दरि, अहं किल चन्द्रवंश्यश्चक्रवर्ती दुष्यन्तः। केवलं मृगयार्थं वनमिदं संप्रविष्टः। तत्प्रसङ्गेन च महर्षेरिममाश्रमं प्राविशम्। प्रविशन्तं मां दृष्ट्वा ससंभ्रममर्घ्यादिकमादाय परमया भक्त्या साधु पूजितवती भवती। तादृशीं भवतीं विलोकयतो मम मानसं महान्मोहः समाविशत्। अथ च त्वां परिणेतुकामस्त्वां विहाय नगरं गन्तुमपारयन्प्रतिपालयंश्च विजने भवत्या दर्शनमिहैव कतिपयैरहोभिर्निवसामि। तत्प्रसीद। ममाग्रमहिषी भूत्वा मां कृतार्थय। यद्यन्मदीयं तत्सर्वमद्यारभ्य सहैव मया त्वदायत्तमवेहि। यदि च मदीयामिमां प्रार्थनां न सार्थयसि नियतं तर्हि मम मरणमेव शरणं भविष्यति।' इति। इत्थं कामशरपीडितस्य सानुरागस्य तस्य स्नेहार्द्रं वचनं श्रुत्वार्धसंजातस्येव वसुंधरा सामिसंपूर्णमनोरथा सा सुन्दरी पितुरसंनिधानेन किमपि कर्तव्यमजानती महीपालं सबहुमानमाह—'महाराज,

पिता रक्षति कौमारे भर्ता रक्षति यौवने।
पुत्रो रक्षति वृद्धत्वे न स्त्री स्वातन्त्र्यमर्हति॥ ४२॥

इति श्रुतिः । तदद्य पितृपरतन्त्राहं स्वतन्त्रा भूत्वा कथमीदृशो कर्मणि प्रवर्तितुमुत्सहे ।' इति । अथ राजा प्राक्तनीनां वह्वीनां राजर्षिकन्यानामुपाख्यानानि व्याख्याय गान्धर्वविवाहविधिनात्मानं परिणेतुं प्रार्थयामास । सापि तान्युपाख्यानानि श्रुत्वा गान्धर्वाभिधं विवाहं शास्त्रीयं जानती तथैवात्मानं परिणेतुमनुमेने । अनन्तरं राजा तेन विधिना तां परिणीय कृतार्थमात्मानं मन्यमानस्तया सह कंचित्कालं सुखमनुभूय तां पश्चान्नेप्यन्निजनगरं जगाम । अथ च देशान्तरादाश्रममागतो महर्षिः सार्वभौमेन दुष्यन्तेन गान्धर्वविधिना परिणीतां दुहितरं श्रुत्वा नितान्तमानन्दसिन्धौ ममज्ज । दुहितरं चाभिननन्द । अथ क्रमेण सपुत्रां तां पतिगृहं संप्रेष्य सुखितो वभूव । राजापि तया सह विविधानमानुषान्भोगाननुभवंश्चिरं वसुमतीं शशास ॥



## कथा १७.

छात्रमालस्यरहितं श्रद्धाभक्तिसमन्वितम् ।
पाठयन्ति सदाचार्या विपरीतं त्यजन्ति तम् ॥ ४३ ॥

कस्यापि विदुषः सकाशे चत्वारो विद्यार्थिनः काव्यं पठन्ति

स्म। तेष्वाद्यास्त्रयो विद्यातुराः श्रद्धाभक्तिसमेताश्च। गुरुमुखादधीतं पाठं प्रत्यहं पृथक्चिन्तयेयुः। यत्र यत्र संशयो भवति तं तमंशं परेद्युर्गुरुमुखान्निःसंशयं जानीयुः। तेन स विद्वांस्तेष्वतीव प्रीतिमान्बभूव। तुरीयस्तु नागनाथनामातीवालसः। श्रद्धाभक्तिविहीनश्च। केवलं चतुष्टसंख्यायाः पूरको बभूव। तं कदाचित्पाठकालेऽनवहितं जातकोपो गुरुराह— 'नागनाथ, न त्वं विद्यातुरः। यतोऽध्ययनकालेऽनवहितो भवसि। अधीतं च पाठं प्रत्यहं पृथङ् न चिन्तयसि। अत एवैतेषामिव तव न संदेहो जायते। अतः पाठनानर्हस्त्वम्। तस्माच्छ्वः प्रभृति नात्रागन्तव्यम्' इति। तच्छ्रुत्वा भीतो नागनाथः सविनयमाह— 'गुरो, क्षन्तव्या इमेऽपराधाः। श्वः प्रभृति सम्यगवहितः पठामि। संदिग्धमंशं च परेद्युः पृच्छामि। अन्यथा मातापितरौ मां ताडयेताम्।' इति। गुरुरपि दयार्द्रचित्तस्तथेत्याह। अथान्येद्युः स वेदिकायां शिष्यानध्यापयन्बभूव। तदासन्नरथ्यायां मासजातः कोऽपि महिषीशिशुः कण्ठरज्ज्वा स्तम्भे बद्धो यावनालस्तम्बान्भक्षयन्नासीत्। नागनाथस्तत्र दत्तावधानो बभूव। तदा महिषीशिशुः स्वशरीराद्द्विगुणदैर्घ्यं यावनालस्तम्बं मुखेन जग्राह। क्रमेण च सर्वं भक्षयामास। ततो जातसंशयो नागनाथो गुरुं प्राह— 'आचार्य, कश्चित्संदेहः' इति। गुरुः

'कोऽसौ' इत्यपृच्छत् । स आह— 'सार्धैकहस्तमायतोऽसौ महिषीशिशुर्हस्तत्रयपरिमितं स्तम्बं भक्षयितुं जग्राह । अहं चातिदीर्घतया स्तम्बस्य सर्वमस्योदरे न मायादिति मत्वा स्तम्बार्धमपानद्वारेण निर्गच्छेदिति तत्र दत्तावधानोऽभवम् । न तु निरगच्छत् । अतो जातसंशयः पृच्छामि ।' 'कुत्रावशिष्टार्धम् ?' इति । तच्छ्रुत्वा गुरुः सह शिष्यैर्हसन्पाठनानर्हं तं निश्चित्य गृहं प्राहिणोत् । इतरांस्तु सम्यक्पाठयामास । युज्यते चेदम् । तथा हि स्मृतिः—

विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना ।
आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत् ॥ ४४ ॥
धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा ।
तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे ॥ ४५ ॥ इति ॥



## कथा १८.

उपायज्ञो हि पुरुषः संकटेषु न सीदति ।
श्रेष्ठिन्यस्ततुलान्यासो वणिग्जीर्णधनो यथा ॥ ४६ ॥

आसीद्व्याघ्रपुरे जीर्णधनो नाम वणिक् । तस्य पित्र्यं धनं यत्किंचिदासीत् । तत्क्रमशो भोगेन क्षपितवान् । अथ द्रव्य-

क्षयात्तत्र वस्तुं लज्जमानो देशान्तरं गन्तुमैच्छत् । तस्य गृहे लोहभारघटिता पूर्वपुरुषोपार्जिता तुला काप्यासीत् । तां स्वमित्रस्य कस्यापि श्रेष्ठिनो गृहे न्यासं कृत्वा देशान्तरं गतः । चिरं तत्र तत्रोषित्वा पुनः स्वपुरमाजगाम । आगत्य च श्रेष्ठिगृहं गत्वा तेन कुशलादिकं पृष्टो यथोचितं प्रतिवचनं ददौ । अथ निक्षेपतुला दीयतामित्याह । वञ्चकः श्रेष्ठी तु तामात्मनः स्वीकर्तुमभिलषन्प्राह— 'भोः, त्वदीया तुला कस्यां चिद्रात्रौ मूषकैर्भक्षिता । तद्गम्यताम् ।' इति । तच्छ्रुत्वा धीमाञ्जीर्णधनश्चिन्तयामास— 'अहो वञ्चकतास्य मूर्खस्य । सत्यामेवान्तस्तुलायामेवमसत्यं वदति । न हि मूषका लोहभारघटितां तुलां भक्षयितुं शक्नुयुः । तत्केनोपायेन तुला लभ्या स्यात्' इति । अथ श्रेष्ठिनमुवाच— 'सुमुख, नास्त्यत्र तवापराधः । यदि तुला मूषकैर्भक्षिता । ईदृश एवायं संसारः । न किंचिदत्र शाश्वतमस्ति । आस्तामेतत् । स्नातुं नदीं गमिष्यामि । तदिमं तव बालं स्नानोपकरणहस्तं मया सह प्रेषय ।' इति । सोऽपि मूढस्तुलालाभेनान्तः संतुष्यन्स्वबालमुवाच— 'वत्स, अयं तव पितृव्यः । स्नातुं नदीं याति । तदनेन सार्धं स्नानोपकरणान्यादाय गच्छ' इति । अनन्तरं वणिक्छिशुः प्रहृष्टमनास्तान्यादाय तेन सह नदीं प्रस्थितः । स च नद्यां स्नात्वा तं शिशुं

नदीगुहायां संगोप्य तद्द्वारं बृहत्या शिलया समाच्छाद्य सत्वरं श्रेष्ठिगृहं गतः । पृष्टश्च तेन— कुत्र मे बालः ? इति । अथैवं प्रतिवचनं ददौ—'श्रेष्ठिन्, तव बालं नदीतटे समुपवेश्य स्नानमाचरतो मम कोऽपि श्येनः समागत्य बलाद्बालमपाहरत् ।' इति । तच्छ्रुत्वा स आह— मिथ्यावादिन्, किमेवमसंभावितं भाषसे ? किं कचिच्छ्येनो बालमपहरेत् ? । समर्पय मे सुतम् । अन्यथा राजसभायां निवेदयिष्यामि ।' इति । जीर्णधनः प्राह —श्रेष्ठिन्, यथेच्छं समाचर । किं मया क्रियताम् । पश्यतो मे तव बालं श्येनोऽपहृत्य डयितः ।' इति । एवं विवदमानौ द्वावपि तौ राजसभां गतौ । तत्र श्रेष्ठी तारस्वरेण प्रोवाच— 'भोः, अब्रह्मण्यमब्रह्मण्यम् । मम शिशुरनेन चौरेणापहृतः ।' इति । तदाकर्ण्य न्यायाधिपो जीर्णधनं पप्रच्छ— 'भोः, किमस्य शिशुस्त्वयापहृतः ? इति । स आह— 'राजन्, नाहमस्य शिशुमपाहरम् । किं तु पश्यतो मे श्येनेन नदीतटादस्य शिशुरपहृतः ।' इति । न्यायाधिपः प्राह— 'भोः, न सत्यमभिहितं भवता । किं श्येनो बालमपहरेत्' इति । अथ बुद्धिमान्जीर्णधनः प्रहसन्प्राह—

तुलां लोहसहस्रस्य यत्र खादन्ति मूषकाः ।
राजंस्तत्र हरेच्छ्येनो बालकं नात्र संशयः ॥ ४७ ॥

इति। तच्छ्रुत्वा न्यायाधिपः कथमेतदिति पप्रच्छ। ततः स तस्मा आदितः सर्वं वृत्तान्तमकथयत्। तदाकर्ण्य न्यायाधिपो जीर्णधनमुपायज्ञं प्रशशंस। श्रेष्ठिनं तु बुद्धिहीनं विनिन्द्य तेन तुलां जीर्णधनाय तेन च बालं तस्मै दापयित्वा तुलालोभिनं श्रेष्ठिनं निष्कशतं दण्डयामास ॥



## कथा १९.

अङ्गुल्यग्रेण यज्जप्तं यज्जप्तं पर्वलङ्घनैः।
व्यग्रचित्तेन यज्जप्तं त्रिविधं निष्फलं भवेत् ॥ ४८ ॥

उज्जयिनीपतिर्विक्रमो वसुमतीमिमां पालयञ्जातु चारानाहूयैवमब्रवीत्— भोः, सर्वतः पृथिवीं परिभ्रमत। यान्यद्भुतानि तीर्थानि देवायतनानि वा तथाविधानि विलोकयथ तानि च मह्यं समागत्य निवेदनीयानि' इति। तेऽपि राजाज्ञां मालामिव शिरसा वहन्तो निष्क्रान्ताः। तेषु कश्चिच्चिरं तत्र तत्र परिभ्रम्य राजानमेत्य विज्ञापयामास— 'देव, अस्ति चित्रकूटनिकटे विशालं किमपि तपोवनम्। तन्मध्ये मनोहरः कश्चिद्देवालयोऽस्ति। तत्र चात्युदग्राद्गिरिशिखराद्विमला कापि जलधारा पतति। तत्र स्नानमात्रेण महापातकान्यपि नश्यन्तीति श्रूयते। किं च

यस्तु पापीयांस्तत्र स्नानमाचरति तस्याङ्गादतीव कलुषमुदकं निःसरति । तेन स पूतो भवति । अन्यच्च, तत्र कश्चिद्ब्राह्मणः प्रतिदिनं महति होमकुण्डेऽग्निं प्रज्वाल्य देवताप्रीत्यै जुहोति । हुत्वा च जपपरायणो भवति । स न केनापि भाषते । तस्य च जपहोमपरस्य कति वत्सरा गता इति न जाने । कुण्डाद्बहिः प्रेरितं भस्म तु पर्वताकारं दृश्यते । एवमतिचित्रं स्थानमद्राक्षीदयं जनः ।' इति । तच्छ्रुत्वा राजा तेन सह तं गिरिं गत्वा निर्झरे स्नात्वा पूतान्तःकरणो देवतां प्रणम्य परममानन्दमवाप । अथ च जपहोमपरायणं ब्राह्मणमुपगम्य विनीतस्तद्वृत्तं पप्रच्छ । गृहीतमौनव्रतोऽपि स विप्रर्षिरेनं मुखतेजसा महानुभावं मन्यमानो मौनभङ्गेन प्रत्युवाच— 'सुमुख, अहं किल बहोः कालाद्देवतामिमां प्रीणयितुमिच्छन्गृहीतमौनव्रतस्त्रिषवणं स्नानमाचरन्नियमेन जपहोमाभ्यामिमामाराधयामि । परमद्यापि देवतेयं न मे प्रसीदति। तेन च दिने दिने ममोत्साहोऽपि ह्रस्वीभवति। किं करोमि ?' इति । एवं तद्वचनमाकर्ण्य करुणाविष्टो राजा स्वयं तदर्थे होममारभत । गते कियति काले देवता न प्रससाद । अनन्तरमिष्टसाहसः स धीरः स्वशीर्षमुत्कृत्य होतुमिच्छन्यावत्कण्ठे कृपाणमकरोत्तावद्देवता कृपाणमाक्षिप्य ब्रवीति स्म— 'भोः साहसिक, प्रसन्नास्मि । वरं वृणीष्व' इति ।

राजा साभ्यर्थनं पप्रच्छ— 'अम्ब, अयं ब्राह्मणो बहोः किल कालान्नियमेन भवतीमाराधयति। कुतोऽस्य ममेव प्रसादं न कृतवती?' इति। सा प्राह— 'वत्स, चिरादयं मामाराधयत्येव। परमस्य चेतः स्वस्थं न बभूव। चञ्चलचित्तस्य च तपः फलाय न कल्पते। यतः

न काष्ठे विद्यते देवो न पाषाणे न मृन्मये।
भावे तु विद्यते देवस्तस्माद्भावो हि कारणम् ॥ ४९ ॥

किं च

मन्त्रे तीर्थे द्विजे दैवे दैवज्ञे भेषजे गुरौ।
यादृशी भावना यत्र सिद्धिर्भवति तादृशी ॥ ५० ॥

अतोऽहं नास्य प्रासीदम्। तव तु दृढभक्तितया प्रसन्नास्मि। तदीप्सितं प्रार्थयस्व' इति। एवं देवतावचनमाकर्ण्य राजा प्रार्थयत। अम्ब, यदि मम प्रसन्ना भवती तर्ह्यस्य, ब्राह्मणस्य मनोरथं पूरयितुमर्हसि' इति। देवी प्राह— 'वत्स, महाद्रुमा इव स्वदेहश्रममविगणय्य परेषां श्रमं परिहरसि—

छायामन्यस्य कुर्वन्ति स्वयं तिष्ठन्ति चातपे।
फलन्ति च परार्थेषु नात्महेतोर्महाद्रुमाः ॥ ५१ ॥

तत्तवैव जीवितं सफलम्। यतः

यस्मिञ्जीवति जीवन्ति वहवः स हि जीवति ।
वकोऽपि किं न कुरुते चञ्च्वा स्वोदरपूरणम् ॥ ५२ ॥ इति ।

एवं विक्रमं प्रशस्य विप्रस्य मनोरथमापूर्यान्तर्हिताभूत् । सोऽपि विप्रेणाशीर्भिरभिनन्दितः स्वनगरमगमत् ॥



## कथा २०.

पद्माकरं दिनकरो विकचं करोति
चन्द्रो विकासयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहिते विहिताभियोगाः ॥ ५३ ॥

उज्जयिनीपतिर्विक्रमो जातु सचिवेषु राज्यभारं निधाय स्वयं योगिवेषेण देशान्तरं प्रति निर्जगाम । निर्गत्य च यत्र स्वचित्तस्य सुखमभूत्तत्र कतिचन दिनान्यतिष्ठत् । यत्र चाश्चर्यं दृष्टं तत्रापि कंचित्कालमनयत् । एवं देशाद्देशं परिभ्रमतस्तस्य कुत्रापि महारण्ये सूर्योऽस्तं जगाम । ततश्च किंचन वृक्षमूलं समाश्रित्योपविष्टः । तस्य च वृक्षस्योपरि चिरजीवी नाम वृद्धः पक्षिराजस्तस्थौ । तस्य पुत्राः पौत्राश्च प्रत्यहं प्रा-

तद्देशान्तरं गत्वा स्वोदरमापूर्य सायं प्रत्येकमेकैकं फलमादाय तस्मै चिरजीविने दिशन्तः सुखमूषुः । युज्यते चेदम् । यतः—

वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥ ५४ ॥

तस्यां च रात्रौ चिरजीवी सुखोपविष्टः पक्षिणोऽपृच्छत्—— वत्साः, सर्वतः परिभ्रमन्तो यूयं किं किमद्भुतमपश्यत ? इति । तच्छ्रुत्वा पटुचञ्चुर्नाम विहंगमः प्राह—— 'तात, नाहं किमप्यद्भुतमद्राक्षम् । किंतु परेद्युर्मम महद्दुःखं भविष्यति ।' इति चिरजीवी किं तदित्यपृच्छत् । पटुचञ्चुः 'इदानीं कथनमात्रेण किं तदुपशाम्यति' इति प्रत्यब्रवीत् । चिरजीवी 'वत्स, यो मित्रबान्धवेभ्यः स्वदुःखं निवेदयति स सुखी भवति । तत्कथ्यतामात्मनो दुःखकारणम्' इति पुनः पृच्छति स्म । अथ पटुचञ्चुरेवं कथयामास——'तात श्रूयताम् । अस्त्युत्तरदेशे शैवालको नाम पर्वतः । तत्समीपे पलाशनगरं नामाग्रहारो वर्तते । तत्र च पर्वते कश्चिद्राक्षसः प्रतिदिनं मार्गागताञ्जनान्बलात्पर्वतं नीत्वा भक्षयन्नासीत् । एकदा तु जनाः सर्वे मिलित्वा तमेवमभ्ययाचन्त—— 'राक्षसोत्तम, यथेच्छं त्वन्मुखागताञ्जनानेवं मा भक्षय । वयं प्रतिदिवसमेकं पुरुषमाहारार्थं दास्यामः । तं भक्षयित्वा तृप्तो भवितुमर्हसि ।' इति । सोऽपि तथेत्यन्वमन्यत ।

अनन्तरं महाजनाः प्रतिदिनं गृहक्रमेणैकैकं पुरुषं तस्मै पायच्छन्। एवं महान्कालोऽतिचक्राम। अद्य तु मम पूर्वजन्म-निमित्तभूतस्य ब्राह्मणस्य बलिवासरः संप्राप्तः। तस्य चैक एव पुत्रः। यदि तं दद्यात्संततिविच्छेदो भवेत्। यदि चात्मानमेव प्रयच्छति तदा तद्भार्यात्यन्तवृद्धा विधवा भवेत्। वैधव्यं पुन-र्महद्दुःखमबलानाम्। तथा चाहुः—

पतिहीना तु या नारी कामं भवतु पुत्रिणी।
धनधान्यैः समृद्धापि विधवेत्युच्यते बुधैः॥ ५५॥ इति।

तदेतद्दुःखं मयि संक्रामति।' इति। तच्छ्रुत्वा वृक्षमूलस्थो विक्रमः कृपाविष्टः सद्यो राक्षसेन ब्राह्मणहिंसां परिजिहीर्षुः स्वय-मेव पर्वतं तमयासीत्। तत्र च वध्यशिलां निरीक्ष्य तत्समीप-स्थितसरोवरे स्नात्वा वध्यशिलायामुपविवेश। राक्षसोऽपि तत्र समागत्य प्रहसितवदनमासीनं राजानं विलोक्य विस्मितः पप्रच्छ—'भो महासत्त्व, को भवान्? कुतः समागतः। यः पुनरत्र शिलायामुपविशति स मामदृष्ट्वैव भयान्म्रियेत। त्वं पुनर्महाधैर्यसंपन्नः स्मेराननो दृश्यसे। अन्यच्च, यस्य मरण-कालः संनिधत्ते स ग्लानिं भजते। त्वं पुनरधिकां कान्तिं प्राप्य दीप्यसे। तत्कथ्यतां तव तत्त्वम्।' इति। राजा प्राह—'सुमुख, किं तवानेन विचारेण? मया परार्थमेव शरीरं दीयते।

तदात्मनः समीहितं कुरु' इति। एवं ब्रुवन्तं तं महाधीरं महोपकारिणं च मन्यमानो राक्षसः प्रसन्नमानसः प्राह— 'महापुरुष, यतःपरार्थमात्मशरीरं प्रयच्छसि तत्तवैव जीवितं श्लाघ्यम्। अथवा भवादृशां परोपकारिणां नेदं चित्रम्। उक्तं च—

किमत्र चित्रं यत्सन्तः परानुग्रहतत्पराः।
न हि स्वदेहशैत्यार्थं जायन्ते चन्दनद्रुमाः॥ ५६॥ इति।

अतो वयस्य, तवाहं तुष्टोऽस्मि। वरं वृणीष्व।' इति। राजा—'यदि प्रसन्नोसि तदद्यप्रभृति मनुष्यभक्षणं परित्यज। अतत्यान्विप्रान्परित्रायस्व। आत्मानमिव तान्द्रष्टुमर्हसि' इति वरमवृणीत। तच्छ्रुत्वा राक्षसोऽपि तदाप्रभृति प्राणिवधमेव परित्यक्तवान्। विक्रमोऽपि कृतकृत्यः पलाशनगरवासिभिर्भूसुरैरभिनन्दितः स्वनगरमगमत्। सन्तः परदुःखं न सहन्ते। तन्निरसने च स्वयमेव व्याप्रियन्ते। निरस्य चात्मानं कृतार्थं मन्यन्ते। ततश्च बहवो लोकाः क्षेमभाजो भवन्ति॥

इति तृतीयः स्तवकः॥



# चतुर्थः स्तबकः ॥

## कथा १.

प्रथमवयसि पीतं तोयमल्पं स्मरन्तः
शिरसि निहितभारा नारिकेला नराणाम् ।
सलिलममृतकल्पं दद्युराजीवितान्तं
न हि कृतमुपकारं साधवो विस्मरन्ति ॥ १ ॥

विक्रमे राज्यं शासत्युज्जयिन्यां कोऽपि ब्राह्मणः सदाचारसंपन्नः सकलशास्त्रविचक्षणः समस्तकल्याणगुणभूषणः परं पुत्रहीनः समभवत् । तमेकदा तत्प्रेयसी जगाद— 'नाथ, पुत्रहीनस्य गृहस्थस्य गतिर्नास्तीति श्रुतिस्मृतिपुराणविदः समामनन्ति । तथा हि—

अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ।
तस्मात्पुत्रमुखं दृष्ट्वा भवेत्पश्चात्तु तापसः ॥ २ ॥
ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानः पतत्यधः ॥ ३ ॥ इति ।

1092

किं च,

शर्वरीदीपकश्चन्द्रः प्रभातोदीपको रविः ।
त्रैलोक्यदीपको धर्मः सुपुत्रः कुलदीपकः ॥ ४ ॥

तत्पुत्रलाभोपायो विचिन्त्यताम् । ज्ञात्वा चानुष्ठीयताम् ।' इति । तदाकर्ण्य भूसुरः प्राह— 'प्रिये, युक्तमवादीः । परं परमेश्वरप्रसादं विना संततिर्न सुलभा । तदद्यारभ्य परं नियममास्थाय परमया भक्त्या भवानीवल्लभमाराधयामः ।' इति । सापि साध्वी तथेत्याह । अथ व्रतोपवासनियमादिभिर्भवानीवल्लभमाराधयतोस्तयोर्गते कियति काले कुत्रापि रजन्यां स्वप्ने वृषभारूढः शैलतनयासमाश्लिष्टवामभागश्चन्द्रकलावतंसः परमेश्वरः प्रत्यक्षो भूत्वा प्रसन्नया दृष्ट्या तं भूसुरमनुगृह्णन्नभाषत— 'वत्स, प्रदोषव्रतं यथावदनुतिष्ठ । तेन तव पुत्रो भविष्यति ।' इति । भूसुरस्तु प्रबुध्य ससंभ्रममुत्थाय प्रातः स्वप्नवृत्तान्तं वृद्धेभ्यो निवेदयामास । ते च तुरीययामानुभूतं तादृशं तत्स्वप्नं श्रुत्वा तमेवं प्रत्यूचुः— भद्र,

स्वप्नस्तु प्रथमे यामे संवत्सरविपाकभाक् ।
द्वितीये चाष्टभिर्मासैस्त्रिभिर्मासैस्तृतीयके ॥ ५ ॥
अरुणोदयवेलायां दशाहेन फलं भवेत् ।
गोविसर्जनवेलायां सद्यः स्वप्नफलं भवेत् ॥ ६ ॥

इति स्वप्नाध्याये पठ्यते । तद्भवतानुभूतोऽयं स्वप्नः शीघ्रमेव फलेदिति मन्महे । अतोऽनुष्ठीयतां प्रदोषव्रतम् ।' इति । इत्थं वृद्धवचनमाकर्ण्य सामिसंपूर्णमनोरथो भूसुरः सह भार्यया मार्गशीर्षशुक्लत्रयोदश्यां मन्दवासरे कल्पोक्तप्रकारेण प्रदोषव्रतमन्वतिष्ठत् । परमेश्वरश्च प्रसन्नः पुत्रमस्मै प्रायच्छत् । अनन्तरं ब्राह्मणः पुत्रस्य जातस्य यथाविधि जातकर्म विधाय द्वादशे दिने देवदत्त इति नाम चकार । अन्नप्राशनचौलोपनयनानि च यथाकालमकरोत् । अथ साङ्गान्वेदानाचार्यैरध्यापयामास । ततः षोडशे वर्षे गोदानादिकं विधाय सुरूपां सुशीलां बुद्धिमतीं कांचन कन्यामन्विष्य विवाहमहोत्सवं विधाय जीवनं परिकल्प्य कृतकृत्यः स्वयं भार्यया सह तीर्थयात्रां कर्तुकामः पुत्राय बुद्धिमेवमुपदिदेश— 'वत्स, अतिकष्टां दशां प्राप्तोऽपि स्वधर्माचारं मा परित्यज । सर्वभूतेषु दयां कुरु । परमेश्वरे भक्तिं विधेहि । अनृतं मा वद । परस्त्रियो मा विलोकय । बलवद्भिर्विरोधं मा कुरु । सज्जनानाश्रय । दुर्जनान्परिहर । वैरिणामपि हितमेव चिन्तय । चोरैः सह मा संलप । निष्ठुराणि वचनानि न भाषेथाः । अल्पनिमित्तं बहुव्ययं मा कुरु । आर्येभ्यो यथाशक्ति दद्याः । धर्मस्थाने मृषा न भाषेथाः । मनसा वाचा कर्मणा च परेषामुपकुरु । स्त्रीभ्यो गुह्यं न निवेदय' इति । इत्थं बहुविध-

अन्याश्च नीतीरुपदिश्य स भूसुरः सभार्यो वारणासीं जगाम । देवदत्तोऽपि पितुरुपदेशं पालयंस्तत्रैव नगरे सुखमुवास ।

अथैकदा होमाय समिधः समाहर्तुं महदरण्यं प्रविश्य देवदत्तो यावत्समिधश्छिच्छेद तावन्मृगयाकुतूहली विक्रमो महान्तं कमपि सूकरमनुधावन्दिङ्मूढः पुरमार्गमजानन्देवदत्तं मार्गं पप्रच्छ । सोऽपि स्वयमग्रे गच्छन्राजानं सबहुमानं नगरमनयत् । अनन्तरं राजा देवदत्तं बहुधा संमान्य कुत्रापि राजकार्ये तं न्ययुङ्क्त । उपकारं च तदीयं पदे पदे प्रकटयामास । एवं कियान्कालो गतः । अथ कदाचिन्मध्येसभं विक्रमस्तमवादीत्— 'आर्य देवदत्त, कथमहं भवदुपकारादुत्तीर्णो भविष्यामि ? यन्मां महतोऽरण्यान्नगरमनयः ।' इति । तदानीं सभ्याः परस्परमूचुः— 'हन्तायं महापुरुषः । यत्स्वल्पमप्युपकृतं महन्मन्यते साधु चेदमाहुः

मनसि वचसि काये पुण्यपीयूषपूर्णा-
त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणून्पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ ७ ॥ इति ।

देवदत्तस्तु स्वमनसि विचारयति स्म । 'किमयं राजा मा-

मसकृदेवं वदति । किं नामास्य मया महदुपकृतम् । किमेतत्सत्यं स्यादुत मिथ्या । अस्य तत्त्वं वोद्धव्यम् ।' इति ।

अथैकस्मिन्दिवसे राज्ञश्चित्तं परीक्षितुमिच्छन्राजकुमारमपहृत्य स्वमन्दिरे संगोप्य तस्य कण्ठभूषणमेकं स्वभृत्यहस्ते दत्त्वा विपण्यां विक्रेतुं प्राहिणोत् । अस्मिन्नवसरे राजकुमारः केनाप्यपहृतो मारितश्चेति राजमन्दिरे महान्कोलाहलः समभवत् । राजापि पुत्रमार्गणाय समन्तात्सेवकान्प्रहिणोति स्म । ते च सर्वतो मार्गयन्तो विपणिमध्ये देवदत्तभृत्यमाभरणहस्तं ददृशुः । अथ तदाभरणं राजकीयं जानन्तस्ते तं दृढं वद्ध्वा राजसभामानिन्युः । राजा तमपृच्छत्— 'रे, कथमेतदाभरणं तव हस्ते समापतितम्? इति । स प्राह—'महाराज, अहं देवदत्तस्य भृत्यः । विपण्यामेतदाभरणं विक्रीय धनमानयेति तेन प्रेरितोऽस्मि । तन्न मां महाराजः स्तेनं मन्तुमर्हति ।' इति । अथ राजा देवदत्तमाहूयापृच्छत् । स एवं प्रत्यभाषत— 'महाराज, धनलोभादहमेव तव कुमारमपहृत्य मारयित्वा च सर्वाण्यभरणानि स्वीकृत्य तेषामिदमेकमाभरणं विक्रेतुमदाम् । प्राक्तनकर्मवशादीदृशी मम बुद्धिरुत्पन्ना । तदुपरि महाराजः प्रमाणम् ।' इति । तदाकर्ण्य कृतज्ञो राजा किमपि प्रतिकर्तुं न शशाक । तदा सभ्याः केचिदाहुः— 'अहो सर्वधर्मशास्त्रवेत्तायं कथमी-

दृशे कर्मणि बुद्धिमकरोत् ?' इति । अपरे केचन प्रत्यूचुः— 'स्वकर्मणा प्रेरितस्यैवं बुद्धिरुद्भूत् । एवं हि समामनन्ति—

कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ ८ ॥ इति ।

तत्किमत्र चित्रम् ? इति । इतरे केचन राजानमब्रुवन्— 'देव यदयं बालघाती सुवर्णस्तेयी च ततः खादिरेण शूलेन हन्तव्यः' इति । मन्त्रिणः प्राहुः— 'महाराज, इमं तिलशश्छित्त्वा गृध्रेभ्यो बलिर्दातव्या ।' इति । एवं तेषां वचनानि श्रुत्वा कृतज्ञो राजा प्राह— 'भोः सुहृदः, अयं किल महोपकारी । यन्मां महतोऽरण्यान्नगरमानिनाय । तदेनं कथं दण्डयेयम् । एवं हि स्मर्यते—

मित्रद्रोही कृतघ्नश्च यस्तु विश्वासघातुकः ।
त्रयस्ते नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥ ९ ॥ इति ।

किं चायं ममाश्रितः । आश्रितेषु दोषं महान्तो न गणयन्ति । तथा हि—

चन्द्रः क्षयी प्रकृतिवक्रतनुः कलङ्की
दोषाकरः स्फुरति मित्रविपत्तिकाले ।
मूर्ध्ना तथापि सततं ध्रियते हरेण
नैवाश्रितेषु महतां गुणदोषचिन्ता ॥ १० ॥

अन्यच्च,

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ ११ ॥ इति ।

अथ देवदत्तमवलोक्य प्राह— 'सखे, किंचिदपि भयं चेतसि मा कार्षीः । मम पुत्रो बलीयसा पुराकृतेन कर्मणा हृतः । किं नाम त्वया कृतम् ? । अन्यच्च, महत्यरण्ये पतितं मां नगरमनैषीः किल । अतः प्रत्युपकारसहस्रैरपि न तावकमृणमपाकर्तुं प्रभवामि । ' इति । एवं समाश्वास्य वस्त्राभरणादिना संभाव्य तं विससर्ज । सोऽप्याश्चर्यसंतोषपरवशो राजकुमारं साभरणं गृहादानीय राज्ञे ददौ । ततः सविस्मयेन राज्ञाभाणि—'देवदत्त, किमेवं कृतम् ? इति । स प्राह— 'राजन्, भवता मध्येसभं बहुवारं 'कथं देवदत्तकृतादुपकारादुत्तीर्णो भविष्यामि ।' इति भणितम् । अतस्तव चित्तपरीक्षार्थं मयैवं कृतम् । क्षन्तव्योऽयमपराधः ।' इति । ततो राजा परं संतुष्य भूयोऽपि तं बहुधा मानयामास । सोपि राज्ञा बहुमानितः परमं विस्मयं गतो राज्ञः कृतज्ञतां प्रशंसन्भवनमगात् ।

साधवः परोपकारपरमाणुमपि पर्वतं मन्यन्ते । नापि यावज्जीवं विस्मरन्ति ॥



## कथा २.

जन्मान्तरकृतं कर्म शुभं वाप्यथवाशुभम् ।
फलं स्वानुगुणं पुंसः प्रयच्छत्यत्र जन्मनि ॥ १२ ॥
गौतमीलुब्धकव्यालमृत्युकालकृतः शुभः ।
संवादो भारतप्रोक्तो निदर्शनमिहोच्यते ॥ १३ ॥

गौतमी नाम पतिहीना कापि स्थविरा सह पुत्रेण वनमगात् । तत्र च शमप्रधाना कन्दादिकमाहरन्ती तपःपरायणा बभूव । अथ कदाचित्पुत्रमाश्रमे निक्षिप्य कार्यवशाद्बहिर्जगाम । तदानीमकस्मादागतेन केनापि कृष्णसर्पेण दष्टस्तत्तनयः पञ्चतामवाप । सा च संकल्पितं कार्यं संपाद्य स्वाश्रममागता गतासुं तनयमद्राक्षीत् । अथ पुत्रवत्सला तपस्विनी पटुप्रसरमपि शोकं विवेकबलेन रुन्धती प्राकृतजन इव न मुक्तकण्ठं विललाप । परं मातृस्नेहसहजया वृत्त्या सूनुमङ्के निधाय यत्किंचिद्ध्यायन्त्यासीत् । अत्रान्तरेऽर्जुनको नाम लुब्धकस्तं कृष्णसर्पं पाशेन संयम्य गौतमीसकाशमानिनाय । तां च तपस्विनीमेवमवादीत्—'मातः, अयं ते पुत्रहा नृशंसः पन्नगाधमः । नासौ पापो मोचनमर्हति । तत्कतमेन प्रकारेण हन्यताम् ? किमग्नौ प्रक्षिप्यताम् ? उत खण्डशश्छिद्यताम् । आज्ञापयतु भवती' इति । तच्छ्रुत्वा

गौतमी प्राह— 'सुमुख, किमनेन हतेन ? नह्यस्य हननेन मृतस्य प्राणाः प्रत्यागमिष्यन्ति । केवलं प्राणिवधजातेन दुरितेन स्पृश्येवहि । तदेनं विमुञ्च' इति । अर्जुनकोऽब्रवीत्—'मातः स्वस्थाः खल्वेवं व्याहरन्ति । न शोकार्ताः । अतः शोकपीडितया भवत्या सापराधमेनं निहत्य शोको मुच्यतां । कृतस्य प्रतिकर्तव्यम् । इति हि सनातनो धर्मः ।' इति । गौतमी प्राह—'सुमुख, युक्तमुक्तं त्वया । तथापि धर्मात्मानः साधवः सापराधेऽपि मृदवो भवन्ति । 'अपकारिणि यः साधुः स साधुः सद्भिरुच्यते' इति वचनात् । अतः सापराधमप्येनं मदपेक्षया मोक्तुमर्हसि' इति । अर्जुनकः पुनरब्रवीत्— 'मातः, नायं बालघाती नृशंसोऽनुकम्पनीयो भवत्या । कृतागसं धर्मविदस्त्यजन्ति । इति श्रवणात् । अतः पापममुं व्यालं हन्तुमनुमन्यतां भवती' इति । शमधना गौतमी व्याधेनैवमसकृद्बोधितापि व्यालं हन्तुं नानुमेने । अत्रान्तरे पाशपीडितः सर्पः कथंचिदुच्छ्वसन्मनुष्यवाचा व्याधमेवं व्याजहार— 'लुब्धक, बालिशस्त्वं न धर्मं जानासि । अतः शृणु । अहं हि मृत्युना भृत्यवत्प्रेरितो बालमेनमदशम् । न स्वतन्त्रः । स्वामिकार्यं कुर्वाणा भृत्याश्च न तेन कृत्येनापराधिनो भवन्ति । अतो न मां निरपराधं हन्तुमर्हसि' इति । तदाकर्ण्य लुब्धकः प्राह— 'पन्नग, न युक्तमुक्तं भवता । मृत्युवच-

नेन प्रेरितोऽपि, त्वं मृत्युश्चेत्युभावप्यत्र कारणमेव भवथः। यथा मृत्पात्रस्य करणे दण्डचक्रादयोऽपि कारणं न केवलं कुलालस्तद्वत्। अतस्त्वं वध्य एवेति। पन्नगो जगाद—'लुब्धक, निरूपितमपि धर्ममजानन्मय्येवाज्ञानमारोपयसि। मृत्पात्रस्य करणे दण्डचक्रादयोऽस्वतन्त्राः। कुलाल एव तु स्वतन्त्रः। तद्वत्प्रकृतेऽपि मृत्युरेव स्वतन्त्रो नाहम्। यथा च मखेषु हवींषि जुह्वतोऽपि ऋत्विजस्तत्फलं नाप्नुवन्ति परं यजमान एवाप्नोति तथा नाहमस्मिन्कर्मणि फलभाक्। अतो न मां हन्तुमर्हसि' इति। एवं परस्परं विवदमानयोस्तयोर्मृत्युस्तत्राजगाम। पन्नगं चेदमब्रवीत्—'पन्नग, अहं किल कालेन चोदितस्त्वामस्मिन्कर्मण्यचोदयम्। यथा जलदा वायुना ततस्ततः कृष्यमाणा वायुतन्त्रा भवन्ति तथा कालेन कृष्यमाणोऽहं कालतन्त्रो भवामि। तत्कथं मामपराधिनं ब्रवीषि। यद्यहमपराधी तत्त्वमपि सापराध एव। आत्मानं निरपराधं ब्रुवन्किमिति मां सापराधं निरूपयासि। अतो विचार्यमाणे न त्वं न चाहं शिशोरस्य विनाशे हेतुः। किं तु काल एव' इति। तदाकर्ण्य पन्नगो जगाद—'मृत्यो, त्वं दोषवानदोष इति वा न ब्रवीमि। त्वयाहमस्मिन्कर्मणि चोदित इत्येतावदेव जानामि। कालेऽपि दोषो वर्तते न वेति विचारे नाहमधिकारी। अतो मा कोपं

कुरु । (लुब्धकं प्रति) अर्जुनक, अपि श्रुतं मृत्योर्भाषितम्? इतः परं वानागसं मां मोक्तुमर्हसि ।' इति । लुब्धकः प्राह— 'पन्नग, न त्वं मृत्युवचनेनादोषः कृतः । मृत्युस्त्वं-चेत्युभावप्यत्र कारणमेव । धिक्त्वां मृत्युवचनेन प्राणिघातुकम् । मृत्युं चैतादृशे क्रूरकर्मणि प्रेरयितारम् ।' इति । तच्छ्रुत्वा मृत्युरर्जुनकमाह— 'लुब्ध,

विवशौ कालवशगावावां निर्दिष्टकारिणौ ।
नातो दोषेण मन्तव्यौ यदि सम्यक्प्रपश्यसि ॥१४॥ इति ।

अत्रान्तरे कालः सरभसं समागत्य प्रोवाच—

यदनेन कृतं कर्म तेनायं निधनं गतः ।
विनाशहेतुः कर्मास्य सर्वे कर्मवशा वयम् ॥ १५ ॥
अतो नाहं न वै मृत्युर्न सर्पो न तथा भवान् ।
न चेयं ब्राह्मणी वृद्धा शिशुरेवात्र कारणम् ॥ १६ ॥ इति ।

तदाकर्ण्य गौतमी लुब्धकमाह—

नैव कालो न भुजगो न मृत्युरिह कारणम् ।
स्वकर्मणैवायं वालः शैशवे निधनं गतः ॥ १७ ॥
मया च तत्कृतं कर्म येनेदं दुःखमागतम् ।
यातु कालस्तथा मृत्युर्मुञ्चार्जुनक पन्नगम् ॥ १८ ॥ इति ।

अथार्जुनकः कर्मैव शिशोर्मरणे कारणं जानन्निरपराधं पन्नगं मुमोच । मृत्युकालौ च यथागतं गतौ ॥



## कथा ३.

निःसङ्गता मुक्तिपदं यतीनां
सङ्गादशेषाः प्रभवन्ति दोषाः ।
आरूढयोगो विनिपात्यतेऽधः
सङ्गेन योगी किमुताल्पबुद्धिः ॥ १९ ॥

पुरा किल सौभरिर्नाम महात्मा कोऽपि महर्षिरन्तर्जले वसन्द्वादशाब्दं तपश्चचार । तत्र सुमन्दो नाम बह्वपत्यो महान्मीनाधिपतिरासीत् । तस्य पुत्रपौत्रादयः पृष्ठतोऽग्रतः पार्श्वयोः पक्षपुच्छशिरसां चोपरि भ्रमन्तोऽहर्निशमतिनिर्वृता रेमिरे । स चापत्यस्पर्शेन समुपचीयमानसुखप्रकर्षः पश्यतः सौभरेस्तैरपत्यैः सहानुदिनं बहुधा रममाणो बभूव । साधु चेदमुच्यते

न वाससां न रामाणां नापां स्पर्शस्तथा सुखः ।
शिशोरालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः ॥२०॥
मलयाच्चन्दनं जातमतिशीतं वदन्ति वै ।
शिशोरालिङ्गनं तस्माच्चन्दनादधिकं भवेत् ॥ २१ ॥

ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ।
गुरुर्गरीयसां श्रेष्ठः पुत्रः स्पर्शवतां वरः ॥ २२ ॥
पुत्रस्पर्शात्प्रियतरः स्पर्शो लोके न विद्यते ।
पुत्रस्पर्शी प्रमोदेत स्वर्गं प्राप्येव पुण्यकृत् ॥ २३ ॥ इति ॥

एवमनवरतमपत्यैः सह निरतिशयं सुखमनुभवन्तं मीनेन्द्रं सुमन्दं विलोकयतोऽस्य महर्षेरेवं बुद्धिरुदभूत् । 'अहो, धन्योऽयं मीनराजः, यदेवमनितरसुलभं संसारसुखमनुभवन्ममापि स्पृहामुत्पादयति । तदहमप्येवं सांसारिकं सुखमनुभविष्यामि' इति । साधु चेदमुच्यते 'सङ्गात्संजायते कामः' इति । 'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति' इति च । अथ जलादुत्तीर्य निर्वेष्टुकामः कन्यान्वेषणपरोऽभवत् ।

अत्रान्तरे ककुत्स्थवंश्यस्य महात्मनो मांधातुः शतबिन्दोः सुतायां बिन्दुमत्यामुत्पन्नाः पञ्चाशद्दुहितरः समासन्नयौवना अनूढा आसन् । तदेतद्विज्ञाय सौभरिः कन्यार्थं मान्धातारमुपजगाम । स चाभ्यागतं महर्षिमन्तः प्रवेश्य यथोचितमर्घ्यादिभिः संपूज्य सविनयमागमनप्रयोजनं पप्रच्छ । स चैनमेवं प्रत्युवाच—

निर्वेष्टुकामोऽस्मि नरेन्द्र कन्यां
प्रयच्छ मे मा प्रणयं विभाङ्क्षीः ।

न ह्यर्थिनः कार्यवशादुपेताः
ककुत्स्थवंशे विमुखाः प्रयान्ति ॥ २४ ॥

अन्येऽपि सन्त्येव नृपाः पृथिव्यां
मांधातरेषामपि सन्ति कन्याः ।
किं त्वर्थिनामर्थितदानशौण्डं
कुलं त्वदीयं तदुपागतस्त्वाम् ॥ २५ ॥

शतार्धसंख्यास्तव सन्ति कन्या-
स्तासां ममैकां नृपते प्रयच्छ ।
अनेन पुण्यं भवतो बहु स्या-
दहं च संपूर्णमनोरथः स्याम् ॥ २६ ॥ इति ।

एवं महर्षिवचनमाकर्ण्य स राजर्षिर्जराजर्जरितशरीरं मृतर्षिमालोक्य चिन्ताकुलः शापभयाच्च प्रत्याख्यानकातरः किंचिदवनतमुखस्तूष्णीं तस्थौ । तादृशं तमालोक्य सौभरिः प्राह—

नरेन्द्र कस्मात्समुपैपि चिन्तां
कन्या हि कस्मैचिदवश्यदेया ।
न मादृशस्ते सुलभो वरश्च
जहीहि चिन्तां सुकृती च भूयाः ॥ २७ ॥ इति ।

---

१. दातृप्रतिग्रहीतृभ्यां सर्वार्थाः संभवन्ति हि । इति रामायणे ।

अथ राजा शापभीतः सानुनयं तं मुनिमाह— 'भगवन्, अस्मत्कुलस्थितिरियं यत्कन्याभिरुचिताय वराय कन्या प्रदीयते। भगवांस्तु जराजीर्णः कन्यामनोरथानामतिदूरवर्ती । कुलाचारश्चावश्यं पालनीयः। तत्किं मया क्रियताम्' इति। तच्छ्रुत्वा महानुभावो महर्षिः क्षणं विचिन्त्य मांधातारमुवाच–– 'राजन्, यद्येवं तदादिश्यतां कोऽपि कन्याधिकृतः कञ्चुकी कन्यान्तःपुरं प्रदर्शयितुम्। यदि कन्यैव काचिन्मामभिलषति तदाहं दारसंग्रहं करिष्यामि। त्वमप्यवश्यं दातुमर्हसि। नो चेदलमस्माकमनेनातीतकालारम्भेण।' इति। अथ मुनिशापशङ्कितेन राज्ञा कञ्चुकी समाज्ञप्तः। तेन सह कन्यान्तःपुरं प्रविशन्नेव स महात्मा सुरसुन्दरीकमनीयं मदनातिशायि रमणीयं रूपमकरोत्। प्रवेश्य चैनमन्तःपुरं कञ्चुकी ताः कन्याः प्राह— 'वत्साः, भवतीनां जनयिता महाराजो वः समाज्ञापयति–– 'अयं ब्रह्मर्षिः कन्यार्थमस्मानभ्यागतः। मया चास्य प्रतिज्ञातम्। यदि या काचिदस्मत्कन्या भगवन्तं वरयते तदवश्यं सर्वाभरणभूषितां तां भगवते दास्यामीति। अतः समीक्ष्यतामयम्' इति। एवं पितुरादेशं कञ्चुकिमुखेन विज्ञाय महर्षिं च भुवनसुन्दरं समीक्ष्य सर्वास्ताः सानुरागाः सप्रमदाः करेणव इव गजयूथपतिं महर्षिं तमहमहमिकया वरयांबभूवुः। ऊचुश्चान्योन्यम्–

अहं भगिन्योऽहमिमं वृणोमि
वृणोम्यहं नैष तवानुरूपः ।
ममैष भर्ता विधिनाद्य सृष्टः
सृष्टाहमस्योपशमं प्रयाहि ॥ २८ ॥ इति ।

किं च,

वृतो मयायं प्रथमं मयायं
गृहं विशन्नेव मया वृतोऽयम् ।
मया मयेति क्षितिपात्मजानां
तदर्थमत्यर्थकलिर्बभूव ॥ २९ ॥

यदा मुनिस्ताभिरतीव हार्दा-
द्वृतः स कन्याभिरनिन्द्यकीर्तिः ।
तदा स कन्याधिकृतो नृपाय
यथावदाचष्ट विनम्रमूर्तिः ॥ ३० ॥

अथ सानुरागाभिः कन्याभिः सर्वाभिरहमहमिकया व्रियमाणमनिन्द्यरूपं तं मुनिं कञ्चुकिमुखेन विज्ञाय विस्मयाविष्टो राजा सरभसमेत्य महर्षिं संपूज्य सर्वाः कन्याः समलंकृत्य वह्निसाक्षिकं तस्मै ददौ । स च ताः परिणीय सर्वाः स्वाश्रममानयत् । तत्र चाशेषशिल्पकल्पकं धातारमिवापरं त्वष्टारं समाहूय तासां प्रत्येकं स्फाटिकान्विचित्रसंस्थानानतिमनोहरान्समस्तव-

स्तुसंपूर्णान्प्रासादान्निर्मातुमादिदेश । शिल्पाचार्योऽपि क्षणेन तादृशान्प्रासादान्निर्माय मुनये दर्शयामास । मुनिश्च सह भार्याभिस्तान्प्रासादान्विलोक्य संतुतोष । अथ तेन महानुभावेन समादिष्टस्तेषु प्रासादेषु हेतुरानन्दानामहेतुर्दुःखानां कुन्दनामा महानिधिः स्थिरं वासमकरोत् । मांधातृदुहितरश्च प्रत्येकमेकैकं प्रासादमासाद्य निधिमहिम्ना समवाप्तसमस्तकामाः सह भर्त्रा दिव्यान्भोगाननुभवन्त्यः सुखमूषुः ।

अथैकदा दुहितृस्नेहसमाकृष्टहृदयः स महीपतिस्तद्दिदृक्षया महर्षेस्तपोवनमागच्छन्स्फुरदंशुमालानां स्फटिकमयीनां रमणीयोपवनजलाशयानां विचित्राकाराणां प्रासादानां श्रेणिमालोकयामास । अथ च संतुष्टः प्रथमं प्रासादं प्रविश्य दुहितरं च विलोक्य गाढं परिष्वज्य कृतासनपरिग्रहः पप्रच्छ—'अप्यत्र वत्से भवत्याः सुखम्? अपि ते महर्षिः स्नेहवान्? उत न स्मर्यतेऽस्मद्गृहावासः?' इति । सा प्राह— 'तात, अतिरमणीयोऽयं प्रासादः । इदमतिमनोहरमुपवनम् । एते कलभाषिहंसकारण्डवादिविहंगमाभिरुताः प्रोत्फुल्लपङ्कजावासा जलाशयाः । इमे च महार्हभक्ष्यभोज्यानुलेपनवस्त्रभूषणादयोऽन्यूना भोगाः । इमानि च मृदूनि शयनासनादीनि । किं बहुना? भवत्प्रसादात्सर्वसंपत्समृद्धं मे गार्हस्थ्यम् । तथापि जन्मभूमिः कया विस्म-

यंते। किं च ममैकं दुःखकारणम्। यदयं मद्भर्ता मदेकमना मय्येवाविरतं रममाणो गृहादस्मात्क्षणमप्यनिष्क्रामन्मद्भगिनी-रूपेक्षते।' इति। इत्थं दुहितृवचनमाकर्ण्य नातिसंतुष्टो राजा द्वितीयं प्रासादं प्रविश्य दुहितरं दृष्ट्वा सस्नेहं परिष्वज्य तथैव कुशलादिकं पृष्टवान्। सापि पूर्ववत्प्रतिवचनं ददौ। अथ सर्वान्प्रासादान्प्रविश्य ताभिस्तथैव प्रतिभाषितः परितोषविस्मयपरवशः सौभरिमेकान्तस्थितमुपेत्य कृतपूजोऽब्रवीत्— 'भगवन्, दृष्टस्ते सुमहानयं सिद्धिप्रभावः। येन स्मरणमात्रकृतसंनिधानो भवतो विश्वकर्मा, अनिवार्यमन्दानन्दहेतोः कुन्दमहानिधेः सांनिध्यम्, युगपदनेकशरीरग्रहणेन चामानुषसुलभभोगानुभवः। नैवंविधमन्यस्य कस्यचिद्विभूतिविलसितमस्माभिरुपलक्षितम्। धन्योऽस्मि भवताहमद्य जामात्रा' इति। एवमभिधाय दुहितुः पत्या संपूजितः कंचित्कालमुषित्वा स्वपुरं जगाम।

अथ गच्छता कालेन महर्षेस्तस्य तासु राजतनयासु पञ्चाशदुत्तरशतं पुत्रा जज्ञिरे। अनुदिनारूढस्नेहप्रकर्षश्च तेषु सुतेष्वतीव ममतासमाकृष्टहृदयो बभूव। अप्येते कलभाषिणः पद्भ्यां गच्छेयुः, अप्येते युवानो भवेयुः, अपिचैतान्कृतदारान्पश्येयम्, कच्चिदेषां पुत्रा जायेरन्, कच्चिदेतेषां पुत्रान्पुत्रसहितान्पश्येयम्। इत्येवं नवनवान्मनोरथान्संकल्पयन्सफलयंश्च तान्क्रमेणात्यारूढ-

विषयाभिलाषो जातु महर्षिरेवं चिन्तयामास— 'अहो मे मोहस्य विस्तारः ।

मनोरथानां न समाप्तिरस्ति
वर्षायुतेनाप्यथवापि लक्षैः ।
पूर्णेषु पूर्वेषु मनोरथाना-
मुत्पत्तयः सन्ति पुनर्नवानाम् ॥ ३१ ॥

स मे समाधिर्जलवासमित्र-
मत्स्यस्य सङ्गात्सहसैव नष्टः ।
परिग्रहः सङ्गकृतो ममायं
परिग्रहोत्था च ममातिलिप्सा ॥ ३२ ॥

निःसङ्गता मुक्तिपदं यतीनां
सङ्गादशेषाः प्रभवन्ति दोषाः ।
आरूढयोगो विनिपात्यतेऽधः
सङ्गेन योगी किमुताल्पबुद्धिः ॥ ३३ ॥

अतः,

सर्वस्य धातारमचिन्त्यरूप-
मणोरणीयांसमतिप्रमाणम् ।

---

१. 'न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥' इति मनुः ।

सितासितं चेश्वरमीश्वराणा-
मारावयिष्ये तपसैव विष्णुम् ॥ ३४ ॥ इति ।

एवं विचिन्त्यासौ महात्मा पुत्रगृहादिकमशेषमर्थजातं परित्यज्य सकलभार्यासमन्वितो वनं विवेश । तत्र चानुदिनं वैखानसनिष्पाद्यमशेषक्रियाकलापं निष्पाद्य क्षपितसकलपापः परिपक्वमनोवृत्तिरात्मन्यग्नीन्समारोप्य भिक्षुरभवत् । अथ भगवत्यासज्य मनः क्रमेणाजमनन्तमनादिनिधनमविकारमच्युतं पदमवाप ॥



## कथा ४.

स्थितस्य कार्यस्य समुद्भवार्थ-
मनर्थकार्यप्रतिघातनार्थम् ।
आगामिनोऽर्थस्य च संग्रहार्थं
यो मन्त्रकृत्स्यात्परमः स मन्त्री ॥ ३५ ॥

विशालायां नन्दो नाम राजा महाशौर्यसंपन्नोऽभूत् । स निजभुजबलेन प्रत्यर्थिभूपालान्स्वपादपद्मोपजीविनो विधायैकच्छत्रेण राज्यमकरोत् । तस्य च बहुश्रुतो नाम मन्त्री । भानुमती नाम महिषी । जयपालो नाम तनयः । स राजा महिष्यां

नितरामनुरागवान्बभूव। सिंहासनेऽपि सहैव तया समुपविशेत्। निमेषमात्रमपि तया विनाभूतो न तिष्ठेत्। तादृशं तं विलोक्य जातु मन्त्री चिन्तयामास—'अयं राजा निर्लज्जो मध्येसभं सिंहासने भार्यामुपवेशयति। तदा सर्वे जनास्तां पश्यन्ति। इदं चानुचितमयं न जानाति। किं क्रियताम्' इति। अथैकदावसरं प्राप्य राजानमब्रवीत् 'महाराज, किंचिद्विज्ञाप्यमस्ति' इति। राजा 'किं तत्? कथ्यताम्' इत्याह। मन्त्री 'यदेषा राज्ञी भानुमती सिंहासनेऽपि सहोपविशति तन्महदनुचितम्। 'असूर्यंपश्या राजदाराः' इति हि संप्रदायः। अत्र नाना जनाः समागत्य तां पश्यन्ति। तदितःपरं नैवं कर्तुं युक्तम्।' इति विज्ञापयामास। तच्छ्रुत्वा राजा प्रोवाच—'मन्त्रिन् युक्तमुक्तं भवता। परं भानुमत्यनालोकनं क्षणमपि न सहे। तदुपायं निरूपय' इति। मन्त्री 'आलेख्यगतां तामालोकयतु देवः' इत्युपायमुपादिशत्। अनन्तरं राजा तद्वचनं समुचितं मत्वा चित्रकारमाहूय भानुमतीरूपं चित्रे निवेशयितुमादिदेश। स तु तस्या रूपं साक्षादालोक्य पद्मिनीलक्षणयुक्तां तां चित्रे विलिलेख। राजापि चित्रलिखितां प्रियां दृष्ट्वा प्रहृष्टश्चित्रकाराय महत्पारितोषिकं ददौ। अनन्तरं राजगुरुः शारदानन्दश्चित्रपटे निवेशितां भानुमतीं दृष्ट्वा चित्रकारमभाणी-

त्— 'भानुमत्याः सर्वं रूपमत्र लिखितम् । परं त्वेकं विस्मृतं त्वया' इति । चित्रकारः 'स्वामिन्, किं तत् ? यन्मया विस्मृतम् । कथ्यताम्' इति सविनयमपृच्छत् । शारदानन्दः प्राह— 'तस्या वामजघनतले तिलसदृशं लक्ष्मास्ति । तन्न लिखितम्' इति । तच्छ्रुत्वा जातसंशयो राजा रहोगतायाः पत्न्या जघनं यावत्पश्यति तावत्तिलसदृशं लक्ष्म तत्र दृष्टम् । अथ चैवं मनस्यचिन्तयत्— 'कथमस्या गुह्यदेशस्थितं लक्ष्म दृष्टवाञ्शारदानन्दः ? नूनमनया सहास्य संयोगो विद्यते । किं च स्त्रियो न विश्वसनीयाः । यतः—

जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ।
हृदये चिन्तयन्त्यन्यं न स्त्रीणामेकतो रतिः ॥ ३६ ॥

किं च—

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ ३७ ॥

तत्किं क्रियतां ?' इति । अथ मन्त्रिणमाहूय सर्वं वृत्तान्तमकथयत् । मन्त्रिणापि तस्मिन्समये तच्चित्तानुगुणं प्रतिभणितम् । अनन्तरं राजा गुरौ जातक्रोधो मन्त्रिणमाह— 'मन्त्रिन्, यदि मम प्रियोऽसि तर्हि निर्घृणममुं शारदानन्दं मारय' इति । सचिवोऽपि तथेति प्रतिज्ञाय लोकानां पुरः शार-

दानन्दं दृढं बद्ध्वा वध्यस्थानमनयत् । नीयमानश्च स साधुः कतिचिच्छ्लोकानपठत्--

कोऽर्थान्प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तं गताः
स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः ।
कः कालस्य न गोचरत्वमगमत्कोऽर्थी जनो गौरवं
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ॥३८॥

काके शौचं कामुके सत्यवाक्यं
क्लीवे शौर्यं मद्यपे तत्वचिन्ता ।
सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः
राज्ञां मित्रं केन दृष्टं श्रुतं वा ॥ ३९ ॥

शुचिरशुचिः पटुरपटुः
शूरो भीरुश्चिरायुरल्पायुः ।
कुलजः कुलेन हीनो
भवति नरो नरपतेरातिक्रोधात् ॥ ४० ॥

वने रणे शत्रुजलाग्निमध्ये
महार्णवे पर्वतमस्तके वा ।
सुप्तं प्रमत्तं विषमस्थितं वा
रक्षन्ति पुण्यानि पुरा कृतानि ॥ ४१ ॥

इत्थं श्लोकाञ्श्रुत्वा मन्त्री स्वमनस्यचिन्तयत्— 'अहो, एतत्सत्यं मिथ्या वा। किमर्थं विप्रवधः क्रियते। महदनुचितमिदम्' इति। एवं विचिन्त्य तं गूढं स्वभवनं नीत्वा भूगृहे निक्षिप्य राजसंनिधिमागत्य 'देव, अनुष्ठितो भवदादेशः' इत्यवादीत्। राजापि 'साधु कृतम्' इति प्रशशंस। अथैकदा राजकुमारो जयपालो मृगयाकुतूहली वनं प्रतस्थे। तदाकालवृक्षादीनि कतिचन दुर्निमित्तानि जातानि। तानि दृष्ट्वा मन्त्रिपुत्रो बुद्धिसागरस्तं बहुधा निवारयामास। जयपालस्तु तद्वचनमनादृत्य गन्तुमेव प्रावर्तत। ततो मन्त्रिपुत्रः प्राह—'जयपाल, तव विनाशकालः समायातः। अन्यथा तवैवंविधा बुद्धिर्नोत्पद्येत। यन्ममापि वचनं न बहु मन्यसे। साधु चेदमुच्यते—

कृतान्तपाशबद्धानां दैवोपहतचेतसाम्।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि॥ ४२॥ इति।

अथवोपार्जितानां कर्मणां फलोपभोगं विना कथं क्षयः स्यात्। यतः,

सद्भावो नास्ति वेश्यानां स्थिरता नास्ति संपदाम्।
विवेको नास्ति मूर्खाणां विनाशो नास्ति कर्मणां॥ ४३॥

तथा च,

अवश्यमुपभोक्तव्यं कृतं कर्म शुभाशुभम् ।
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥ ४४ ॥

एवं बहुधा निवारयन्तं बुद्धिसागरमनादृत्य जयपालः खड्ग-व्याघ्रशरभादिमृगकुलसमाकुलं महदरण्यं प्रविश्य यावत्परावृत्य पश्यति तावत्सर्वोऽपि सैन्यवर्गो नगरमार्गे लग्नो दृष्टः । एकाकी तुरगमात्रसहायः संवृत्तः । अथ मुहूर्तं मृगयां कृत्वा श्रान्तः किंचित्सरोवरं ददर्श । तत्र चाश्वादवतीर्य कस्यापि वृक्षस्य शाखायामश्वं निबध्य जलं पीत्वा शान्तपिपासस्तरोश्छायायां क्षणं विशश्राम । तत्रान्तरेऽतिभयंकरः कोऽपि व्याघ्रस्तत्राजगाम । तं दृष्ट्वा भीतस्तुरंगमश्छिन्नबन्धो यथागतं नगरमधावत् । जयपालोऽपि भयाद्वेपमानावयवः शाखामालम्ब्य ससंभ्रमं द्रुममारुरोह । तत्र च पूर्वारूढं भल्लूकं दृष्ट्वा द्विगुणं भयं प्राप्तः । तादृशं तमवलोक्य साधुर्भल्लूकःससान्त्वमेवमवादीत्— 'राजकुमार, मा भैषीः । अद्य मां शरणं गतस्त्वम् । यतो व्याघ्राद्भीतो मदाश्रयमिमं वृक्षं समारूढः । मयि च विश्वस्य व्याघ्रादपि न भेतव्यम् ।' इति । तच्छ्रुत्वा राजकुमारः सभयं प्रार्थयत—'ऋक्षराज, व्याघ्राद्भीतोऽहं त्वामद्य शरणं गतः' तन्मामवश्यं रक्षितुमर्हसि । अनेन च तव महत्पुण्यं भवेत् । तथा हि—

एकतः क्रतवः सर्वे समग्रवरदक्षिणाः ।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥ ४६ ॥

तच्छ्रुत्वा साधुना भल्लूकेन राजपुत्रोऽभयवचनैः साधु विश्वासितः । अत्रान्तरे व्याघ्रोऽपि वृक्षमूलमाजगाम । सूर्यश्चास्तं गतः । ततो मृगयापरिश्रान्तो जयपालः सुहृदा भल्लूकेनाङ्कमारोपितः सुखं सुष्वाप । तदानीं व्याघ्रो भल्लूकमवादीत्—'अहो ऋक्ष, अयं किल मनुष्यो नगरनिवासी । अस्मान्हन्तुमेव वनमिदमागतः । अतः शत्रुभूतमेनं कथमङ्के न्यवेशयः । अद्य त्वयोपकृतोऽपि पश्चादपकारमेव तव करिष्यति । तदेनं निर्विशङ्कमधः पातय' इति । तच्छ्रुत्वा भल्लूकः प्राह शार्दूल, अयं कीदृशो वा भवतु । परं मां शरणं गतः । अतोऽमुं न पातयेयम् । शरणागतमारणेन हि महत्पातकं भवेत् । तथा हि—

विश्वासघातकाश्चैव शरणागतघातकाः ।
वसन्ति नरके घोरे यावच्चन्द्रदिवाकरौ ॥ ४६ ॥

अथ सुप्तोत्थितं जयपालं निद्रोन्मुखो भल्लूकः प्राह—'राजपुत्र, अहं मुहूर्तं निद्रां गमिष्यामि । त्वमप्रमत्तो निर्भयश्च भवितुमर्हसि ।' इति । जयपालः 'तथा करोमि' इत्याह । ततो भल्लूको राजपुत्रसमीपे निद्रां गतः । तदा वञ्चको व्याघ्रो

जयपालमाह— 'राजकुमार, त्वमस्मिन्मा विश्वासं कुरु । यतोऽयं भल्लूकश्चञ्चलचित्तो दृश्यते । चञ्चलचित्तस्य प्रसादोऽपि किल भयंकरः । तथा च पठ्यते—

**क्षणे तुष्टाः क्षणे रुष्टा वितुष्टाश्च क्षणान्तरे ।**
**अव्यवस्थितचित्तानां प्रसादोऽपि भयंकरः ॥४७॥ इति ।**

किं च त्वां मत्सकाशाद्रक्षित्वा गते मयि स्वयमेव हत्वा भक्षयितुमिच्छति । अतस्त्वमेनं निःशङ्कमधः पातय । अहमेनं भक्षयित्वा यथाभिलषितं गमिष्यामि । त्वमपि सुखेन निजनगरं गमिष्यसि' इति । एवं वञ्चकस्य तस्य वाचमाकर्ण्य मन्दमतिर्जयपालो यावद्भल्लूकमधः पातयामास तावत्स साधुर्वृक्षात्पतन्नपि शाखान्तरमालम्बे । जयपालोऽपि विफलयत्नस्तं दृष्ट्वातीव किल विभाय । अथ भयाविष्टं तं मूढं भल्लूकः शशाप— 'भोः पापिष्ठ, किमर्थं बिभेषि? यत्त्वयोपार्जितं कर्म तदवश्यमुपभोक्तव्यम् । अतस्त्वं ससेमिरेति वदन्पिशाचो भूत्वा वनाद्वनं परिभ्रम ।' इति । ततः प्रभातमासीत् । व्याघ्रः स्वच्छन्दं गतः । भल्लूकोऽपि यथेच्छमगात् । राजकुमारोऽपि ससेमिरेति वदन्पिशाचो भूत्वा वनेषु परिबभ्राम । नन्दभूपालस्तु शून्यं समागतमश्वं सेवकमुखेन विज्ञाय चिन्ताकुलो मन्त्रिणः समाहूय भणति स्म— 'भो मन्त्रिणः, मृगयार्थं कुमारे निर्गच्छति

बहूनि किल दुर्निमित्तानि दृष्टानि। तेषां फलं सद्य एव समुपनतम् । यमारुह्य वनं गतः कुमारः सोऽयं तुरंगमः शून्यः समागतः । अतस्तन्मार्गणाय वनं गन्तुमिच्छामि ।' इति । तच्छ्रुत्वा तेऽपि तथा क्रियतामित्याहुः । अथ मन्त्रिभिः परिवारेण च सहितः स राजा कुमारो येन मार्गेण गतस्तेनैव मार्गेण वनं प्राविशत् । ततो वनमध्ये परिभ्रमन्तं ससेमिरेति प्रजल्पन्तं पिशाचभूतं सुतमालोक्य राजा महति शोकसागरे निमग्नः कर्तव्यमजानंस्तमादाय नगरमागमत् । आगत्य च तदुन्मादशमनाय बहुधा यत्नमकरोत् । परं केनापि प्रकारेण कुमारः स्वस्थो न बभूव । अथ चिन्तासंतप्तः स्वगुरुं महात्मानं शारदानन्दं स्मरन्मन्त्रिणं बहुश्रुतमभाणीत्— 'मन्त्रिन्, यद्यद्य शारदानन्दः स्यात्क्षणमात्रेण चिकित्सां कुर्यात् । स च मूढेन मया वृथैव मारितः । पुरुषेण यत्कार्यं क्रियते तद्विचार्यैव कर्तव्यम् । अन्यथा ह्येवंविधा आपदः संभवेयुः । साधु चेदमुच्यते—

सहसा विदधीत न क्रिया-
मविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं
गुणलुब्धाः स्वयमेव संपदः ॥ ४८ ॥ इति ।

किं च श्रूयते । पुरा ब्राह्मणी काचिदविमृश्यकारिणी सुतनि-

विशेषं पोषितं निरपराधं नकुलमपराधिबुद्ध्या हत्वा परमं दुःखमनुबभूवेति । तद्वदविमृश्यकारी खल्वहं मूढो निरपराधं महानुभावं विप्रवरमपि चाचार्यं शारदानन्दं हत्वैवमापदमापन्नः परितप्ये । किमहमिदानीमनुतिष्ठेयम् ।' इति । एवं पश्चात्तापपीडितस्य राज्ञो वचनमाकर्ण्य मन्त्रिप्रवरो बहुश्रुतः तत्त्वमुद्भावयिष्यन्प्राह— 'महाराज, किमनेन गतचिन्तनेन ?

गते शोको न कर्तव्यो भविष्यन्नैव चिन्तयेत् ।
वर्तमानेषु कार्येषु प्रवर्तन्ते विचक्षणाः ॥ ४९ ॥

तदिदानीं यत्कार्यं तदालोचयतु महाराजः' इति । अथ क्षणं विचिन्त्य राजा सचिवमब्रवीत्— 'मन्त्रिन्, यः कोऽपि कुमारस्य चिकित्सां करिष्यति तस्यार्धराज्यं दास्यामीत्यभितो नगरमुद्घोषय' इति । ततो मन्त्री तथैव विधाय स्वभवनमागत्य शारदानन्दाय सर्वं वृत्तं निवेदयामास । तच्छ्रुत्वा शारदानन्दः सचिवमभाषत— 'बहुश्रुत, यद्येवमद्य राजगृहं गत्वा राज्ञे एवं निवेदय— 'मम गृहे ग्रामीणा विदुषी कापि कन्या वर्तते । सा यद्येनं पश्येदवश्यं चिकित्सां कुर्यात्' इति । अथ मन्त्री तथा निवेदयति स्म । राजापि तच्छ्रुत्वा सपुत्रः सपरिजनो मन्त्रिगृहमागत्य सभायामुपविवेश । जयपालोऽपि ससेमिरेति वदन्नुपविष्टः । तदाकर्ण्य यवनिकान्तर्वर्ती शारदानन्दो 'भो

राजपुत्र' इत्यामन्त्रयत । तच्छ्रुत्वा राजपुत्रः पुनरपि ससेमिरे-त्याह । तादृशं तमुद्दिश्य शारदानन्दः पद्यमिदं पपाठ—

सद्भावं प्रतिपन्नानां वञ्चने का विदग्धता ।
अङ्कमारुह्य सुप्तानां हनने किं नु पौरुषम् ॥ ५० ॥ इति ।

तत्पद्यं श्रुत्वा राजपुत्रश्चतुर्णां वर्णानामादिमं वर्णं परित्यज्य सेमिरेति प्राजल्पत् । अथ स महात्मा पद्यमन्यत्पठति स्म—

सेतुं दृष्ट्वा समुद्रस्य गङ्गासागरसंगमम् ।
ब्रह्महत्या प्रमुच्येत मित्रद्रोही न मुच्यते ॥ ५१ ॥ इति ।

तत्पद्यं श्रुत्वा जयपालो वर्णद्वयं परित्यज्य मिरेति भाषितु-मारभत अथापरमिदं पद्यं शारदानन्दः पपाठ—

मित्रद्रोही कृतघ्नश्च यस्तु विश्वासघातकः ।
त्रयस्ते नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥ ५२ ॥ इति ।

अनन्तरं राजकुमारो वर्णत्रयं परित्यज्य 'रा' इत्यब्रवीत् । तच्छ्रुत्वा शारदानन्दश्चतुर्थमिदं पद्यमपाठीत्—

राजन्भोस्तव पुत्रस्य यदि कल्याणमिच्छसि ।
दानं देहि द्विजातिभ्यो वर्णानां ब्राह्मणो गुरुः ॥५३॥ इति ।

ततो राजपुत्रः स्वस्थमनाः सावधानश्च भल्लूकवृत्तान्तं सर्वं

पित्रे यथावत्कथयामास । सोऽपि तच्छ्रुत्वा विस्मितः शारदानन्दमपृच्छत्—

ग्रामे वससि कल्याणि विपिनं नैव गच्छसि ।
ऋक्षव्याघ्रमनुष्याणां कथं जानासि भाषितम् ॥५४॥ इति ।

तच्छ्रुत्वा शारदानन्दः प्रत्यब्रवीत्—

देवद्विजप्रसादेन वाणी जिह्वां ममाश्रिता ।
तेनाहमभिजानामि भानुमत्या यथाङ्कितम् ॥ ५५ ॥ इति ।

तच्छ्रुत्वा नन्दभूपालो विस्मयसंतोषपरवशो यावद्यवनिकामाचकर्ष तावद्भस्मरुद्राक्षधारी शांभवमणिः शारदानन्दः साक्षाददृश्यत । दृष्टमात्रमेव तं राजा सपुत्रः साष्टाङ्गपातं प्रणनाम । अथ मन्त्रिणा राज्ञे पूर्ववृत्तान्तः कथितः । अनन्तरं राजा मन्त्रिणं बहुधा संमान्य प्राह— 'मन्त्रिन्, तव संसर्गेणाहमकीर्तेरुद्धृतोऽस्मि । पुत्रश्चापरिहार्यादुन्मादादुत्तीर्णः । अतो भवादृशेन सत्पुरुषेण सङ्गो विधेयः—

वारयति वर्तमानामापदमागामिनीं च सत्सङ्गः ।
तृष्णां च हरति पीतं गङ्गाया दुर्गतिं च सद्योऽम्भः ॥ ५६ ॥

एवं बहुधा स्तुत्वा मन्त्रिणं वस्त्रादिना संभाव्य शारदानन्दं च यथापूर्वमाचार्यपदमारोप्य स राजा राज्यमकरोत् । अतो बहुश्रुत सदृशा मन्त्रिणो महीपालैः संग्राह्या भवन्ति ॥

## कथा ९.

फलानुगुण उद्योगः प्रयच्छति फलं नृणाम् ।
भगीरथो महीं गङ्गामानिनाय न चांशुमान् ॥ ५७ ॥

अयोध्यायां सगरो नाम राजा बभूव । तस्य केशिनी सुमतिश्चेति द्वे भार्ये आस्ताम् । महता कालेन स राजा तयोः प्रजां न लेभे । अथ प्रजाकामः सह ताभ्यां गिरीन्द्रं हिमवन्तमासाद्य तपसा भृगुमाराधयामास । स च महर्षिस्तपसा समाराधितः सगरमनुगृह्णन्सादरमाह––

अपत्यलाभः सुमहान्भविष्यति तवानघ ।
कीर्तिं चाप्रतिमां लोके प्राप्स्यसे पुरुषर्षभ ॥ ५८ ॥
एका जनयिता तात पुत्रं वंशकरं तव ।
षष्टिं पुत्रसहस्राणि अपरा जनयिष्यति ॥ ५९ ॥ इति ।

अथ केशिनी स्वच्छन्देन वंशकरमेकं पुत्रमलभत । सुमतिश्च षष्टिं पुत्रसहस्राणि । परमसमञ्जनामा केशिनीसुतः पापाचारो बभूव । स हि रथ्यासु खेलतो बालान्बलादादाय सरयूजले प्रक्षिपन्मज्जतश्च तान्समीक्ष्य प्रहसन्पौराणामहितमाचचार । एवं बहुधा पौरजनविरोधिनं सज्जनप्रतिबाधकं च तं सुतं नीतिमान्राजा नगरान्निर्वासयामास । साधु चेदमुच्यते— 'प्राप्तकालं

तु ते दण्डं पातयेयुः सुतेष्वपि' इति। तस्य चांशुमान्नाम सुतोऽभवत्। स तु गुरुजनपूजकः पौरजनपालकश्च सन्सर्वलोकप्रियो बभूव।

अथ महात्मा सगरः पुरोहितान्पुरस्कुर्वन्हिमवद्विन्ध्ययोर्मध्ये-वाजिमेधं क्रतुमारभत। तदा वासवो राक्षसीं तनुमास्थाय वाजिनं तमपाहरत्। वाजिनमपश्यन्भीतो राजा तदाहरणाय सुमतिनन्दनानाज्ञापयामास। ते च सर्वतो भूमिं विचित्य वाजिनमपश्यन्तः प्रागुत्तरां दिशं गत्वा खरैर्नखैः पृथ्वीमखनन्। क्रमेण च रसातलं प्राप्य वासुदेवांशं भगवन्तं कपिलं ददृशुः। तस्य च समीपे तं वाजिनम्। अथ निधिलाभेनेव निर्धना वाजिलाभेन प्रहर्षमतुलं प्राप्तास्ते भगवन्तं कपिलमेव हयहर्तारं मन्यमानाः प्रयुञ्जानाश्च परुषवचनानि तमभ्यधावन्। स तु भगवान्महता रोषेण समाविष्टः सागरान्सर्वान्हुंकारेण भस्मसादकरोत्।

एवं स्वपुत्रान्कपिलमहसा दग्धानजानानः स दीक्षितो राजा कंचित्कालं साश्वानां तेषामागमनं प्रत्यपालयत्। अथ चिरेणाप्यप्रतिनिवृत्तान्पुत्रान्विज्ञाय किंचिदिव चिन्ताकुलः पौत्रमंशुमन्तं पितृगतिपरिज्ञाने वाजिसमाहरणे च चोदयामास। सोऽपि शूरः कार्मुकपाणिर्निर्गम्य तत्र तत्र विचित्य क्रमेण रसा-

तलं प्राप्य भस्मराशीकृतान्पितॄन्दृष्ट्वा दुःखशोकसमन्वितश्चुक्रोश। अथ च ददर्श तत्राविदूरतश्चरन्तं यज्ञियमश्वम्। अनन्तरं पितॄणां सलिलक्रियां कर्तुकामः सलिलार्थी निपुणां दृष्टिं दिक्षु विक्षिपन्पितॄणां मातुलं भगवन्तं सुपर्णमद्राक्षीत्। स च भगवान्शोकाकुलमेनमाश्वासयन्सलिलक्रियायाश्च निवर्तयन्प्राह—

मा शुचः पुरुषव्याघ्र वधोऽयं लोकसंमतः।
कपिलेनाप्रमेयेन दग्धा हीमे महाबलाः॥ ६० ॥

सलिलं नार्हसि प्राज्ञ दातुमेषां हि लौकिकम्।
गङ्गा हिमवतो ज्येष्ठा दुहिता पुरुषर्षभ॥ ६१ ॥

तस्यां कुरु महाबाहो पितॄणां तु जलक्रियाम्।
भस्मराशीकृतानेतान्प्लावयेल्लोकपावनी॥ ६२ ॥

तया क्लिन्नमिदं भस्म गङ्गया लोककान्तया।
षष्टिं पुत्रसहस्राणि स्वर्लोकं प्रापयिष्यति॥ ६३ ॥

गच्छ चाश्वं महाभाग गृहीत्वा पुरुषर्षभ।
यज्ञं पैतामहं वीर समापयितुमर्हसि॥ ६४ ॥ इति।

एवं सुपर्णवचनमाकर्ण्य स धीमान्सहयो यज्ञवाटमुपेत्य पितामहाय सर्वं वृत्तं निवेदयामास। स च पुत्रवृत्तान्तश्रवणेन दुःखितो यज्ञं यथाविधि समाप्य स्वनगरीं गत्वा चिन्ताकुलो दिवो

गङ्गां महीमानिनीषुरपि तदुपायमनिर्धारयन्कालेन दिवं गतः ।

अनन्तरं प्रकृतयस्तत्पौत्रमंशुमन्तं राजानं प्राप्य चिरममोदन्त । स चान्ते दिलीपनामनि स्वसुते भूभारं निवेश्य गङ्गानयनेन पितॄनुद्दिधीर्षुः पुण्ये हिमवतः शिखरे सुदारुणं तपश्चरन्संकल्पितं फलमलभमान एव कालवशेन देहवियोगमवाप ।

अथ महातेजा दिलीपः पितामहानुद्धर्तुमिच्छन्दुश्चरेणापि पितुस्तपसालब्धगतींस्तानालोच्य कथं गङ्गावतरणम्, कथं तेषां जलक्रिया, कथं चैतांस्तारयेयम्, इति चिन्तापरोऽभवत् । तस्य चैवमनवरतचिन्तापरस्य महात्मनो भगीरथनामा परमधार्मिकः पुत्रोऽजायत । अथ जातपुत्रो यज्ञैर्बहुभिरिष्ट्वा गङ्गावतरणमनिर्धारयन्नेव वसुमतीं चिरं परिपाल्य व्याधिना कालधर्ममुपेयिवान् ।

भगीरथस्त्वनपत्योऽपत्यकामो गङ्गां च महीमवतारयितुमिच्छन्मन्त्रिषु राज्यं निवेश्य गोकर्णे महातीर्थे दीर्घं तपः समातिष्ठत् । तस्य च महात्मनो घोरे तपसि वर्तमानस्य वर्षसहस्राणि व्यतीयुः । अथ कठोरेण तस्य तपसा सुप्रीतो भगवान्प्रजापतिः सह सुरगणैरुपेत्य तपस्विनं तमनुगृह्णन्सादरमेवमब्रवीत्—

भगीरथ महाभाग प्रीतस्तेऽहं जनेश्वर ।
तपसानेन तप्तेन वरं वरय सुव्रत ॥ ६५ ॥ इति ।

महाभागो भगीरथः कृताञ्जलिः सर्वलोकपितामहं तं भगवन्तमेवं प्रार्थयामास—

यदि मे भगवान्प्रीतो यद्यस्ति तपसः फलम् ।
सगरस्यात्मजाः सर्वे मत्तः सलिलमाप्नुयुः ॥ ६६ ॥
गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम् ।
स्वर्गं गच्छेयुरत्यन्तं सर्वे मे प्रपितामहाः ॥ ६७ ॥
देया च संततिर्देव नावसीदेत्कुलं च नः ।
इक्ष्वाकूणां कुले देव एष मेऽस्तु वरः परः ॥ ६८ ॥ इति ।

एवं भगीरथवचनमाकर्ण्य भक्तवत्सलो भगवानाह—

भगीरथ महाभाग महानेष मनोरथः ।
एवं भवतु भद्रं ते इक्ष्वाकुकुलवर्धन ॥ ६९ ॥
इयं हैमवती गङ्गा ज्येष्ठा हिमवतः सुता ।
एनां धारयितुं शक्तो हरस्तत्र नियुज्यताम् ॥ ७० ॥
गङ्गायाः पतनं राजन्पृथिवी न सहिष्यते ।
तां वै धारयितुं वीर नान्यं पश्यामि शूलिनः ॥ ७१ ॥ इति ।

एवं भगीरथमाभाष्य गङ्गां च तन्मनोरथमनुवर्तितुं समादिश्य भगवान्सह सुरगणैस्त्रिदिवं जगाम ।

अथ भगीरथः संवत्सरमेकं पापहरं शंकरं परमया भक्त्या समाराधयामास । आराधितश्च भक्तवत्सलः स भगवान्प्रसन्नस्तमेवमावभाषे—

**प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि तव प्रियम् ।**
**शिरसा धारयिष्यामि शैलराजसुतामहम् ॥ ७२ ॥** इति ।

अनन्तरं भगीरथेनाभ्यर्थिता भगवती हैमवती गङ्गा बलीयसा स्रोतसा शंकरं जिगीषन्ती महत्तरं रूपं दुःसहं च वेगमास्थाय शिवे शिवशिरस्याकाशादपतत् । सर्वज्ञो भगवांस्तु तादृशं तस्या अवलेपं विज्ञायातिमहति जटामण्डलकन्दरे तिरोहितां तामकरोत् । सा चातिमहतापि प्रयत्नेन ततो निर्गन्तुमपारयन्ती तत्रैव चिरं किल बभ्राम । अथ तामपश्यन्भगीरथः शंकरं प्रसादयितुं पुनः परमं तपः समातिष्ठत् । तेन चात्यर्थं तोषितो भगवांस्तदपेक्षया जटामण्डलाद्गङ्गां विससर्ज । अनन्तरं तयानुगम्यमानो राजा स्यन्दनमारुह्य रसातलं प्रतस्थे । तच्चाद्भुततमं गङ्गावतरणं दिदृक्षवो देवगन्धर्वसिद्धादयो विमानारूढा वियति संघीभूताः । गङ्गापि तीव्रतमं वेगमास्थाय मत्स्यकच्छपशिंशुमारमुखैरसंख्यैर्जलजन्तुभिः पूर्णा सर्वतोमुखैः स्रोतोभिरद्भुतं प्रावहत् । तां च वसुधातलमागता देवगन्धर्वादयो भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः । ये च शापाद्वसुधां प्राप्तास्तेऽपि तत्र स्नात्वा

धूतपापाः स्वान्स्वाँल्लोकान्प्रतिपेदिरे । एवं सकललोकपावनी सा सुरापगा भगीरथमनुव्रजन्ती महर्षेर्यजमानस्य जह्नोर्यज्ञवाटं प्रवाहैः प्लावयामास । स तु महात्मा सद्यः संक्रुद्धः सर्वं किल गङ्गाया जलं निःशेषमपिवत् । अथ देवगन्धर्वमहर्षिसंघैः प्रार्थितो महर्षिस्तैरेव स्वदुहितृत्वं प्रापितां तां जाह्नवीं श्रोत्राभ्यां विससर्ज । राजापि क्रमेण तां रसातलं नीत्वा तया भस्मराशीकृतान्पितॄन्प्लावयामास । तदा सर्वलोकपितामहो ब्रह्मा समेत्य भगीरथमभाषत—

तारिता नरशार्दूल दिवं याताश्च देववत् ।
पुत्राः षष्टिसहस्राणि सगरस्य महात्मनः ॥ ७३ ॥

सागरस्य जलं लोके यावत्स्थास्यति पार्थिव ।
सगरस्यात्मजास्तावत्स्वर्गे स्थास्यन्ति देववत् ॥ ७४ ॥

गङ्गा च दुहिता ज्येष्ठा भविष्यति तवानघ ।
त्वत्कृतेन च नाम्नाथ लोके स्थास्यति विश्रुता ॥ ७५ ॥

पितामहानां सर्वेषां त्वमत्र मनुजाधिप ।
कुरुष्व सलिलं राजन्प्रतिज्ञामपवर्जय ॥ ७६ ॥

पूर्वकेण हि ते राजन्सगरेण महात्मना ।
धर्मिणां प्रवरेणापि नैष प्राप्तो मनोरथः ॥ ७७ ॥

तथैवांशुमता तात लोकेऽप्रतिमतेजसा ।
गङ्गां प्रार्थयता नेतुं प्रतिज्ञा नापवर्जिता ॥ ७८ ॥
राजर्षिणा गुणवता महर्षिसमतेजसा ।
दिलीपेनापि ते पित्रा नैष प्राप्तो मनोरथः ॥ ७९ ॥
सा त्वया समतिक्रान्ता प्रतिज्ञा पुरुषर्षभ ।
प्राप्तोऽसि परमं लोके यशः परमभास्वरम् ॥ ८० ॥
पितामहानां सर्वेषां कुरुष्व सलिलक्रियाम् ।
स्वस्ति तेऽस्तु गमिष्यामि स्वं लोकं मनुजर्षभ ॥ ८१ ॥

एवमुक्त्वा भगवांस्त्रिविष्टपं जगाम । भगीरथोऽपि गङ्गायां कृताभिषेकः पितॄणां सलिलक्रियां विधाय कृतकृत्यः सर्वैर्लोकैः प्रशस्यमानः स्वपुरीं प्रविवेश ॥



## कथा ६.

धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् ।
ब्राह्मेण तेजसा पूर्वं क्षात्रं तेजः पराजितम् ॥ ८२ ॥

पुरा किल महाक्षत्रियो विश्वामित्रः सपुत्रदारः कदाचित्पृथ्वीपर्यटनाय ससैन्यः प्रतस्थे । बहून्देशान्परिक्रम्य पावनानि च

क्षेत्राणि बहूनि संसेव्य क्रमेण ब्रह्मर्षेर्वसिष्ठस्याश्रममभ्याजगाम। अभ्यागतं तं महाराजं वसिष्ठोऽनामयं पृष्ट्वा फलमूलादिभिरुपहारैर्यथार्हमुपचचार। अथ सपरिजनस्य तस्यातिथ्यं चिकीर्षुः कामदुघां शबलां नन्दिनीमातिथ्यसंभारसंभरणाय समादिदेश। सापि कामदोग्ध्री तत्क्षणमेव षड्रसोपेतं मोदकलड्डुकवटकपप्पटापूपातिरसादिभिर्विविधैरुपस्कारैः सहितं विस्मयनीयं मानुषदुर्लभं चतुर्विधमन्नं जनयामास। तदुपभुज्य सपरिवारो महाराजस्तृप्तेर्विस्मयस्य च परां काष्ठामारूढश्चिन्तयामास— 'मुनिरयं वनस्थः। केवलं कन्दमूलफलाशनः। न च जानपदानि वस्तून्यस्य सुलभानि। तत्कथमसावेतादृशमसार्वभौमसुलभमातिथ्यमस्माकं कृतवान्। नूनमिदं स्वर्धेनोः प्रभावविलसितं स्यात्।' इति। एवं विचिन्त्य सुरभिं स्वीचिकीर्षुर्महर्षिमाह— 'महर्षे, श्लाघ्यतमेनानेन भवदातिथ्येन सपरिवारोऽहमतितरां तृप्तिमागतः। परं तु, येयं स्वर्धेनुर्नन्दिनी धेनुरत्नं हि सा। रत्नहारी च पार्थिव इति सर्वजनविदितम्। तदिमां नन्दिनीं मह्यं दातुमर्हसि।' इति। तच्छ्रुत्वा स मुनिरग्निहोत्रादिनिखिलक्रियाकलापनिर्वर्तनसाधनभूतां कामदुघां तां कामधेनुं तस्मै दातुं नानुमेने। अथ स राजा स्वधेनुविनिमयेन तां दातुं मुनिं बहुधा निर्बबन्ध। तदपि मुनिर्नाभ्युपागमत्। अथाहमभिमान्यवनिपालः स्वनि-

देशलङ्घनमसहमानः क्रोधमाविशन्सुरभिं बलादाचकर्ष । आकृष्टा च सोच्चैस्तरामाक्रोशन्ती मुनिना प्रेरिता म्लेच्छादीनि विविधानि बलानि तत्क्षणमेव जनयामास । अथोभयोः सैन्ययोर्विबुधविस्मयावहं विभीषणं युद्धं प्रावर्तत । तत्र क्रमेण राजसैन्यं सुरभिसैन्येन निःशेषं नाशितमभूत् । अथ शतं विश्वामित्रस्य पुत्राः सुसंक्रुद्धा आयुधपाणयो महात्मानं वसिष्ठमभ्यधावन् । स च भगवान्हुंकारेणैव तान्सर्वान्भस्मसादकरोत् । एवं ब्रह्मिष्ठेन वसिष्ठेन हतपुत्रो हतसैन्यश्च क्षत्रियप्रवरो भग्नदंष्ट्रो नाग इव सद्यो निष्प्रभतां गतः । अथ हतशेषमेकं पुत्रं राज्यभरणाय नगरं संप्रेष्य परं निर्वेदमापन्नो हिमवत्पार्श्वं गत्वा महादेवप्रसादमभिकाङ्क्षन्घोरं तपश्चचार । गच्छता कालेन महादेवः प्रसन्नस्तस्मै साङ्गोपाङ्गं सरहस्यं धनुर्वेदं ब्राह्मादीनि च सर्वाणि दिव्यास्त्राणि प्रददौ । तानि लब्ध्वा परं दृप्तः स राजा ब्रह्मर्षिं वसिष्ठं हतमेव मन्वानः पुनस्तदाश्रममागत्य दिव्यास्त्राणि मुमोच । तैश्च कालानलोपमैस्तत्तपोवनं कृत्स्नं निर्दग्धमभूत् । तपोवनवासिनो मुनयो मृगाः पक्षिणश्च भीता नाना दिग्भ्यः पलायांबभूवुः । अथ शून्यमाश्रमं विलोक्य महाकोपसमाविष्टो वसिष्ठो विधूममिव कालाग्निं यमदण्डमिवापरं ब्रह्मदण्डमुद्यम्य कौशिकमुक्तानि माहेश्वराणि ब्रह्मास्त्रा-

दीनि सर्वाणि दिव्यास्त्राणि जग्रास । एवं ब्राह्मेण तेजसा ग्रसितसकलदिव्यास्त्रः कौशिको भग्नदंष्ट्रो नाग इव केवलं निःश्वसन्निर्वीर्यश्चिन्ताकुलो भूत्वा ब्रह्मतेजः प्रशंसन्क्षत्रतेजश्च निन्दन्ब्रह्मत्वसंपादनाय तपस्तप्तुं सह महिष्या दक्षिणां दिशं ययौ ॥



## कथा ७.

तपोबलजुषां किंचिन्नास्त्यशक्यं महात्मनाम् ।
त्रिशङ्कुं स्वर्गमनयत्तपसा गाधिनन्दनः ॥ ८३ ॥

अथ दक्षिणस्यां दिशि तपश्चरतस्तस्य हविष्यन्दादयः पुत्रा जज्ञिरे । पुर्णे च वर्षसहस्रे सकामस्य तस्य तपसा किंचिदिव तोषितः सर्वलोकपितामहो ब्रह्मा समेत्य तं राजर्षिरसीत्याह । स च राजर्षिशब्देनातृप्तः पुनस्तपः समारभत । अत्रान्तरे सशरीर एव स्वर्गं गन्तुमभिलषन्निक्ष्वाकुवंश्यस्त्रिशङ्कुर्गुरुणा वसिष्ठेन निराकृतस्तत्पुत्रानुपगम्य कोपितैस्तैर्दत्तचण्डालभावः पौरामात्यपरित्यक्तस्तपोधनं विश्वामित्रं शरणं जगाम । स च चण्डालरूपिणं राजानं विलोक्य जातकरुणः प्राह— 'राजन्नैक्ष्वाक, यदेवं धार्मिकः सत्यसंधश्च भवान्गुरुणा वासिष्ठेन निराकृतस्तत्पुत्रैश्च दुर्विनीतैर्दत्तचण्डालभावः कौशिकं मां शरणं गतस्तदद्य

हस्तप्राप्तमेव स्वर्गमवेहि । मास्तु ते चिन्ता । अनेनैव शरीरेण त्वां सुरलोकं प्रापयामि ।' इति । अथ तेन तदर्थं समारब्धे यज्ञे समाहूताः सर्वे महर्षयो नानादिग्भ्यः समाजग्मुः । परं महोदयनामा कोऽपि मुनिः शतं वासिष्ठाश्च न समागताः । कौशिकं चैवं निनिन्दुः—

क्षत्रियो याजको यस्य चण्डालस्य विशेषतः ।
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः ॥ ८४ ॥

ब्राह्मणा वा महात्मानो भुक्त्वा चण्डालभोजनम् ।
कथं स्वर्गं गमिष्यन्ति विश्वामित्रेण पालिताः ॥ ८५ ॥ इति ।

तां च निन्दां शिष्यमुखेन श्रुत्वा क्रुद्धः कौशिकस्तानेवं शशाप—

ये दूषयन्त्यदुष्टं मां तप उग्रं समास्थितम् ।
भस्मीभूता दुरात्मानो भविष्यन्ति न संशयः ॥ ८६ ॥

अद्य ते कालपाशेन नीता वैवस्वतक्षयम् ।
सप्त जातिशतान्येव मृतपाः सन्तु सर्वशः ॥ ८७ ॥

श्वमांसनियताहारा मुष्टिका नाम निर्घृणाः ।
विकृताश्च विरूपाश्च लोकाननुचरन्त्विमे ॥ ८८ ॥

---

१. वासिष्ठाः ।

महोदयस्तु दुर्बुद्धिर्मामदूष्यं ह्यदूषयत् ।
दूषितः सर्वलोकेषु निषादत्वं गमिष्यति ॥ ८९ ॥
प्राणातिपातनिरतो निरनुक्रोशतां गतः ।
दीर्घकालं मम क्रोधाद्दुर्गतिं वर्तयिष्यति ॥ ९० ॥ इति ।

अथ समागतैर्महर्षिभिर्यथावत्समारब्धे क्रतौ याजको विश्वामित्रो हविर्ग्रहणाय सर्वा देवता आवाहयामास । देवतास्तु चण्डालयाजिनं तं निन्दन्तो हविरादानाय न समाजग्मुः । अनन्तरं क्रोधाविष्टः कौशिकः स्वतपोबलमवलम्ब्य पश्यतां महर्षीणां त्रिशङ्कुं सशरीरं सुरलोकमारोहयामास । तं च गुरुशापहतं चण्डालं स्वर्गानर्हं मन्यमानः सुरराजः सह सुरगणैरधः पातयामास । पातितश्च स कृपणः स्वर्लोकादवाक्छिराः पतन् 'रक्ष रक्ष' इति कौशिकमाक्रन्दत् । आक्रन्दध्वनिमाकर्ण्य स तपोधनो मा भैषीरिति धीरमुद्घोष्य देवेषु तीव्रं रोषमाहार्य महर्षिमध्यगतस्त्रिशङ्क्वर्थे स्वर्गान्तरं सिसृक्षुः सप्तर्षीनपरान्नक्षत्रमालाश्च वह्वीः सृष्ट्वा 'अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः ।' इति मन्वानो देवगणानपि स्रष्टुं समुपचक्रमे । ततः संभ्रान्ताः सुरगणाः सत्वरं समेत्य महात्मानं कौशिकं सानुनयमिदं वचनमूचुः—

अयं राजा महाभाग गुरुशापपरिक्षतः।
सशरीरो दिवं यातुं नार्हत्येव तपोधन ॥ ९१ ॥ इति।

तच्छ्रुत्वा स मुनिपुंगवस्तानेवं प्रत्यब्रवीत्—

सशरीरस्य भद्रं वस्त्रिशङ्कोरस्य भूपतेः।
आरोहणं प्रतिज्ञाय नानृतं कर्तुमुत्सहे ॥ ९२ ॥

स्वर्गोऽस्तु सशरीरस्य त्रिशङ्कोरस्य शाश्वतः।
नक्षत्राणि च सर्वाणि मामकानि ध्रुवाण्यथ ॥ ९३ ॥ इति।

एवं मुनिवचनमाकर्ण्य ते देवा बाढमित्यूचुः। मुनिरपि कोपाद्विरराम। अनन्तरं हविर्ग्रहणमप्यभ्युपगतवत्सु देवेषु कौशिको यथाविधि यज्ञं समापयामास। देवा महर्षयश्च यथागतं जग्मुः। अहो! पश्यत कौशिकस्य तपोबलम् ॥



## कथा ८.

न कश्चिच्चण्डकोपानामात्मीयो नाम विद्यते।
अप्यात्मजातानशपत्कोपनः कुशिकात्मजः ॥ ९४ ॥

एवं दक्षिणस्यां दिशि तपोविघ्नमुपस्थितं दृष्ट्वा स राजर्षिस्तां परित्यज्य पश्चिमां दिशमभिययौ। तत्र च पुष्करेषु तीर्थेषु

कन्दमूलफलाशनः कठोरं तपः समातिष्ठत् । तस्मिन्समयेऽयोध्याधिपतिरम्बरीषनामा महीपतिर्वाजिमेधेन यष्टुं समुपचक्रमे । तस्य च यजमानस्य पशुमिन्द्रो मायया राक्षसीं तनुमास्थायापाजहार । प्रणष्टे च पशावुद्विग्नाः पुरोहितादयो यजमानहितैषिणस्तमेवं प्रोचुः—

पशुरद्य हृतो राजन्प्रणष्टस्तव दुर्नयात् ।
अरक्षितारं राजानं घ्नन्ति दोषा नरेश्वर ॥ ९५ ॥

प्रायश्चित्तं महद्ध्येतन्नरं वा पुरुषर्षभ ।
आनयस्व पशुं शीघ्रं यावत्कर्म प्रवर्तते ॥ ९६ ॥ इति ।

तच्छ्रुत्वा राजा पश्वन्वेषणाय प्रस्थाय बहूञ्जनपदान्वनानि च बहूनि परिक्रम्य पशुमलभमानो भृगुतुङ्गे गिरौ सपुत्रं सहभार्यं च ऋचीकं संददर्श । दृष्ट्वा च तं ब्रह्मर्षिं स राजर्षिः सविनयं प्रणम्य कुशलादिकं च पृष्ट्वा साभ्यर्थनमाह—

गवां शतसहस्रेण विक्रीणीषे सुतं यदि ।
पशोरर्थे महाभाग कृतकृत्योऽस्मि भार्गव ॥ ९७ ॥

सर्वे परिसृता देशा यज्ञीयं न लभे पशुम् ।
दातुमर्हसि मूल्येन सुतमेकमितो मम ॥ ९८ ॥ इति ।